इदं बीजरहस्यं मे रक्षणीयंप्रयत्नतः । श्रद्धाहीने न दातव्यं न देयञ्चाशुचौ क्वचित्
अन्यच्च शृणुविप्रेन्द्रभविष्येद्वापरेभवान् । एकोनत्रिंशकेब्रह्मन् सत्यंव्यासोभविष्यति

तदा वाराणसीं प्राप्य सिद्धिं प्राप्स्यस्यभीप्सिताम् ।
व्यस्य वेदान् पुराणनि धर्मान्समुपदिश्य च ॥ १०६ ॥

हितञ्च तेवदाम्येकंसाम्प्रतंतत्समाचर । पश्यकिञ्चिदितोगत्वास्कन्दमग्रेस्थितंप्रभुम्
वाराणस्यारहस्यञ्चयथावच्छिवभाषितम् । तवतुष्टिकरंब्रह्मन् कथयिष्यतिषण्मुखः

इति लब्ध्वा वरं सोऽथ महालक्ष्मीं प्रणम्य च ।
ययावगस्तिर्यत्रास्ति कुमारः शिखिवाहनः ॥ १०६ ॥

इतिश्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखण्डे-
ऽगस्त्यप्रस्थानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## षष्ठोऽध्यायः

### तीर्थाध्यायवर्णनम्

पाराशर्य उवाच

शृणुसूत महाभाग कथांश्रुतिसहोदराम् । यां वै हृदिनिधायेह पुरुषः पुरुषार्थभाक्
ततः श्रीदर्शनानन्दसुधाधाराधुनीं मुनिः । अवगाह्य सपत्नीकः परांमुदमवाप सः ॥
वह्निकुण्डसमुद्भूत! सूतनिर्मलमानस । शृणुष्वैकं पुराविद्भिर्भाषितं यत्सुभाषितम्
परोपकरणं येषां जागर्तिहृदये सताम् । नश्यन्ति विपदस्तेषां सम्पदःस्युः पदे पदे
तीर्थस्नानैर्नसा शुद्धिर्बहुदानैर्न तत्फलम् । तपोभिरुग्रैस्तन्नाप्यमुपकृत्या यदाप्यते
परोपकृत्यायोधर्मोधर्मोदानादिसम्भवः । एकत्रतुलितौ धात्रा तत्रपूर्वोऽभवद्गुरुः ॥

परिनिर्मथ्य वाग्जालं निर्णीतमिदमेव हि ।
नोपकारात्परो धर्मो नापकारादघं परम् ॥ ७ ॥



उपकर्तुरगस्त्यस्यजातमेतन्निदर्शनम् । क्वतादृक्काशिजंदुःखं क्वतादृक्श्रीमुखेक्षणम्
करिकर्णाग्रचपलश्रीवितंविविधंवसु । तस्मात्परोपकरणंकार्यमेकं विपश्चिता

यल्लक्ष्मीनाममात्राप्त्या नरो नो माति कुत्रचित् ।
साक्षात्समीक्ष्य तां लक्ष्मीं कृतकृत्योभवन्मुनिः ॥ १० ॥

गच्छन् यदृच्छयासोथदूराच्छ्रीशैलमैक्षत । यत्रसाक्षान्निवसतिदेवः श्रीत्रिपुरान्तकः
उवाच वचनं पत्नींतदाप्रीतमनामुनिः । इहस्थितैवपश्य त्वं कान्तेकान्ततरं परम्
श्रीशैलशिखरंश्रीमदिदन्तद्यद्विलोकनात । पुनर्भवोमनुष्याणांभवेऽत्रनभवेत्क्वचित्

गिरिश्चतुरशीत्यायं योजनानां हि विस्तृतः ।
सर्वलिङ्गमयो यस्मादतः कुर्यात्प्रदक्षिणम् ॥ १४ ॥

लोपामुद्रोवाच

किञ्चिद्विज्ञप्तुमिच्छामि यद्याज्ञा स्वामिनो भवेत् ।
ब्रूते हि याऽननुज्ञाता पत्या सा पतिता भवेत् ॥ १५ ॥

अगस्त्य उवाच

किंवक्तुकामादेवि!त्वंब्रूहितत्त्वमशङ्किता । न त्वादृशीनांवाक्यंहिपत्युः खेदायजायते
ततः पप्रच्छ सा देवी प्रणम्य मुनिमानता । सर्वेषाञ्च हितार्थाय स्वसन्देहापनुत्तये

लोपामुद्रोवाच

श्रीशैलशिखरंदृष्ट्वा पुनर्जन्मनविद्यते । इदमेव हि सत्यञ्चेत्किमर्थंकाशिरिष्यते ॥

अगस्तिरुवाच

आकर्णय वरारोहे!सत्यं पृष्टंत्वयामले !। निर्णीतमसकृच्चैतन्मुनिभिस्तत्त्वचिन्तकैः

मुक्तिस्थानान्यनेकानि कृतस्तत्रापि निर्णयः ।
तानि ते कथयाम्यत्र दत्तचित्ता भव क्षणम् ॥ २० ॥

प्रथमंतीर्थराजन्तुप्रयागाख्यंसुविश्रुतम् । कामिकंसर्वतीर्थानांधर्मकामार्थमोक्षदम्
नैमिषञ्च कुरुक्षेत्रं गङ्गाद्वारमवन्तिका । अयोध्या मथुरा चैव द्वारकाप्यमरावती
सरस्वतीसिन्धुसङ्गोगङ्गासागरसङ्गमः । कान्तीचत्र्यम्बकञ्चापिसप्तगोदावरीतटम्

कालञ्जरंप्रभासश्च तथा बदरिकाश्रमः । महालयस्तथोङ्कारक्षेत्रं वैपौरुषोत्तमम्
गोकर्णोभृगुकच्छश्च भृगुतुङ्गश्चपुष्करम् । श्रीपर्वतादितीर्थानिधारातीर्थंतथैवच
मानसान्यपितीर्थानिसत्यादीनिचवैप्रिये । एतानिमुक्तिदान्येवनात्रकार्याविचारणा

गयातीर्थञ्च यत्प्रोक्तं तत्पितॄणां हि मुक्तिदम् ।
पितामहानामृणतो मुक्तास्तत्तनया अपि ॥ २७ ॥

सधर्मिण्युवाच

मानसान्यपितीर्थानियान्युक्तानिमहामते । कानिकानिचतानीहह्येतदाख्यातुमर्हसि

अगस्त्य उवाच

शृणुतीर्थानिगदतोमानसानिममानघे । येषुसम्यङ्नरः स्नात्वाप्रयातिपरमांगतिम्
सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदयातीर्थं तीर्थमार्जवमेवच
दानंतीर्थं दमस्तीर्थं सन्तोषस्तीर्थमुच्यते । ब्रह्मचर्यं परंतीर्थं तीर्थञ्चप्रियवादिता
ज्ञानंतीर्थंधृतिस्तीर्थं तपस्तीर्थमुदाहृतम् । तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परा
न जलाप्लुतदेहस्यस्नानमित्यभिधीयते । सस्नातोयोदमस्नातःशुचिःशुद्धमनोमलः

यो लुब्धः पिशुनः क्रूरोदाम्भिकोविषयात्मकः ।
सर्वतीर्थेष्वपि स्नातः पापो मलिन एवसः ॥ ३४ ॥

न शरीरमलत्यागान्नरो भवतिनिर्मलः । मानसे तु मले त्यक्तेभवत्यन्तः सुनिर्मलः
जायन्ते च म्रियन्तेचजलेष्वेवजलौकसः । न च गच्छन्तितेस्वर्गमविशुद्धमनोमलाः
विषयेष्वतिसंरागो मानसोमल उच्यते । तेष्वेव हि विरागोस्यनैर्मल्यं समुदाहृतम्
चित्तमन्तर्गतं दुष्टंतीर्थस्नानान्न शुद्ध्यति । शतशोथजलैर्धौतंसुराभाण्डमिवाशुचि
दानमिज्यातपः शौचंतीर्थसेवाश्रुतं तथा । सर्वाण्येतानितीर्थानियदिभावोननिर्मलः
निगृहीतेन्द्रियग्रामोयत्रैवचवसेन्नरः । तत्रतस्य कुरुक्षेत्रं नैमिषंपुष्कराणिच ॥ ४० ॥
ध्यानपूते ज्ञानजले रागद्वेषमलापहे । यः स्नाति मानसे तीर्थे स यातिपरमांगतिम्
एतत्ते कथितं देवि!मानसंतीर्थलक्षणम् । भौमानामपि तीर्थानांपुण्यत्वेकारणंशृणु

यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।



तथापृथिव्यामुद्देशाः केचित्पुण्यतमाः स्मृताः ॥ ४३ ॥

प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसा । परिग्रहान्मुनीनाञ्चतीर्थानांपुण्यतास्मृता
तस्माद्भौमेषु तीर्थेषुमानसेषुचनित्यशः । उभयेष्वपियः स्नातिसयाति परमांगतिम्
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्यच । अदत्त्वा काञ्चनंगाश्चदरिद्रोनामजायते
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः । न तत्फलमवाप्नोति तीर्थाभिगमनेनयत्
यस्यहस्तौ च पादौचमनश्चैव सुसंयतम् । विद्यातपश्चकीर्तिश्चसतीर्थफलमश्नुते
प्रतिग्रहादुपावृत्तः सन्तुष्टो येनकेनचित् । अहङ्कारविमुक्तश्च स तीर्थफलमश्नुते ॥
अदम्भको निरारम्भोलघ्वाहारोजितेन्द्रियः । विमुक्तःसर्वसङ्गैर्यः सतीर्थफलमश्नुते
अकोपनोऽमलमतिः सत्यवादीदृढव्रतः । आत्मोपमश्चभूतेषु स तीर्थफलमश्नुते

तीर्थान्यनुसरन् धीरः श्रद्दधानः समाहितः ।
कृतपापो विशुद्ध्येत किंपुनः शुद्धकर्मकृत् ॥ ५२ ॥
तिर्यग्योनिं न वै गच्छेत्कुदेशे नैव जायते ।
न दुःखी स्यात्स्वर्गभाक्च मोक्षोपायञ्च विन्दति ॥ ५३ ॥

अश्रद्दधानः पापात्मानास्तिकोऽच्छिन्नसंशयः । हेतुनिष्ठश्चपञ्चैतेनतीर्थफलभागिनः
तीर्थानिचयथोक्तेनविधिनासञ्चरन्तिये । सर्वद्वन्द्वसहाधीरास्तेनराः स्वर्गभागिनः

तीर्थयात्राञ्चिकीर्षुः प्राग्विधायोपोषणं गृहे ।
गणेशञ्च पितॄन्विप्रान्साधूञ्छक्त्या प्रपूज्य च ॥ ५६ ॥

कृतपारणकोहृष्टो गच्छेन्नियमधृक्पुनः । आगत्याभ्यर्च्यचपितॄन्यथोक्तफलभाग्भवेत्
नपरीक्ष्योद्विजस्तीर्थेष्वन्नार्थीभोज्यएवच । सक्तुभिः पिण्डदानञ्च चरुणापायसेनच
कर्तव्यमृषिभिर्दृष्टंपिण्याकेन गुडेन च । श्राद्धंतत्र प्रकर्तव्यमर्घ्यावाहनवर्जितम् ॥
अकालेप्यथवा काले तीर्थेश्राद्धञ्च तर्पणम् । अविलम्बेनकर्तव्यंनैवविघ्नंसमाचरेत्

तीर्थंप्राप्य प्रसङ्गेन स्नानं तीर्थे समाचरेत् ।
स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न च ॥ ६१ ॥

नृणांपापकृतांतीर्थेपापस्यशमनंभवेत् । यथोक्तफलदंतीर्थं भवेच्छ्रद्धात्मनांनृणाम्

षोडशांशंसलभतेयः परार्थञ्च गच्छति । अर्धंतीर्थफलंतस्ययः प्रसङ्गेन गच्छति ॥
कुशप्रतिकृतिंकृत्वा तीर्थवारिणि मज्जयेत् । मज्जयेच्च यमुद्दिश्य सोष्टमांशं लभेतवै
तीर्थोपवासः कर्तव्यःशिरसोमुण्डनंतथा । शिरोगतानिपापानियान्तिमुण्डनतोयतः
यद्दिर्तीर्थप्राप्तिः स्यात्ततोह्नःपूर्ववासरे । उपवासस्तुकर्तव्यःप्राप्ताह्नि श्राद्धदोभवेत्
तीर्थप्रसङ्गात्तीर्थाङ्गमप्युक्तं त्वत्पुरो मया । स्वर्गसाधनमेवैतन्मोक्षोपायश्च वै भवेत्

काशी कान्ती च मायाख्या त्वयोध्या द्वारवत्यपि ।
मथुरावन्तिका चैताः सप्तपुर्योऽत्र मोक्षदाः ॥ ६८ ॥
श्रीशैलो मोक्षदः सर्वः केदारोपि ततोऽधिकः ।
श्रीशैलाच्चापि केदारात्प्रयागं मोक्षदं परम् ॥ ६६ ॥

प्रयागादपितीर्थाग्र्यादविमुक्तंविशिष्यते । यथा विमुक्तेनिर्वाणंनतथाक्वाप्यसंशयम्

अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि च ।
काशीं प्राप्याऽपि मुच्येत नान्यथा तीर्थकोटिभिः ॥ ७१ ॥

अत्रार्थे कथयिष्येहमितिहासंपुरातनम् । यथाविष्णुगणैरुक्तं द्विजाय शिवशर्मणे ॥

तीर्थाध्यायमिमंश्रुत्वा नरोनियतमानसः ।
श्रावयित्वा द्विजांश्चापि श्रद्धाभक्तिसमन्वितान् ॥ ७३ ॥
क्षत्रियान्धर्मनिरतान्वैश्यान्सन्मार्गवर्तिनः ।
शूद्रान्द्विजेषु भक्तांश्च निष्पापो जायते द्विजः ॥ ७४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखण्डे
तीर्थाध्यायवर्णनंनाम षष्ठोऽध्यायः ॥ ६ ॥

---

# सप्तमोऽध्यायः

## सप्तपुरीवर्णनेशिवशर्मविप्रकथानकवर्णनम्

### अगस्तिरुवाच

मथुरायांद्विजः कश्चिदभूद्भूदेवसत्तमः । तस्यपुत्रोमहातेजाः शिवशर्मेति विश्रुतः
अधीत्यवेदान्विधिवदर्थंविज्ञायतत्त्वतः । पठित्वाधर्मशास्त्राणिपुराणान्यधिगम्य च

अङ्गान्यभ्यस्यतर्कांश्च परिलोड्य समन्ततः ।
मीमांसाद्वयमालोक्य धनुर्वेदंविगाह्य च ॥ ३ ॥

आयुर्वेदंविचार्यापि नाट्यवेदेकृतश्रमः । अर्थशास्त्राण्यनेकानिप्राप्याश्वगजचेष्टितम्

कलासु च कृताभ्यासो मन्त्रशास्त्रविचक्षणः ।
भाषाश्च नानादेशानां लिपीर्ज्ञात्वा विदेशजाः ॥ ५ ॥
अर्थानुपार्ज्य धर्मेण भुक्त्वा भोगान्यदृच्छया ।
उत्पाद्य पुत्रान्सुगुणांस्तेभ्यो ह्यर्थं विभज्य च ॥ ६ ॥

यौवनं गत्वरंज्ञात्वाजरांदृष्ट्वाश्रितांश्रुतिम् । चिन्तामवापमहतींशिवशर्मा द्विजोत्तमः
पठतोमेगतः कालस्तथोपार्जयतोधनम् । नाराधितो महेशानः कर्मनिर्मूलनक्षमः ॥
न मयातोषितोविष्णुः सर्वपापहरोहरिः । सर्वकामप्रदोनॄणां गणेशोनार्चितोमया
तमस्तोमहरःसूर्यो नार्चितोवै मयाक्वचित् । महामायाजगद्धात्रीनध्याताभवबन्धहृत्
न प्रीणिता मया देवा यज्ञैःसर्वैंसमृद्धिदाः । तुलसीवनशुश्रूषा न कृतापापशान्तये ॥
न मया तर्पिता विप्रा मृष्टान्नैर्मधुरैरसैः । इहापि च परत्रापि विपदामनुतारकाः ॥
बहुपुष्पफलोपेताः सुच्छायाःस्निग्धपल्लवाः । पथि नारोपिता वृक्षाइहामुत्रफलप्रदाः
दुकूलैःस्वानुकूलैश्च चोलैःप्रत्यङ्गभूषणैः । नालङ्कृताःसुवासिन्य इहामुत्रसुवासदाः
द्विजाय नोर्वरा दत्ता यमलोकनिवारिणी । सुवर्णं न सुवर्णाय दत्तं दुरितहृत्परम्

नाऽलङ्कृता सवत्सा गौः पात्राय प्रतिपादिता ।

इह पापापहन्त्र्याशु सप्तजन्मसुखावहा ॥ १६ ॥

ऋणापनुत्तयेमातुःकारितोनजलाशयः । नातिथिस्तोषितः क्वापि स्वर्गमार्गप्रदर्शकः

छत्रोपानत्कुण्डिकाश्च नाध्वगाय समर्पिताः ।

यास्यतः संयमिन्यां हि स्वर्गमार्गसुखप्रदाः ॥ १८ ॥

न च कन्याविवाहार्थं वसु क्वाऽपि मयार्पितम् ।

इह सौख्यसमृद्ध्यर्थं दिव्यकन्यार्पकं दिवि ॥ १६ ॥

न वाजपेयावभृथे स्नातो लोभवशादहम् । इह जन्मनि चान्यस्मिन्बहुमृष्टान्नपानदे

न मया स्थापितं लिङ्गं कृत्वा देवालयं शुभम् ।

यस्मिन्संस्थापिते लिङ्गे विश्वं संस्थापितं भवेत् ॥ २१ ॥

विष्णोरायतनंनैव कृतं सर्वसमृद्धिदम् । न च सूर्यगणेशानां प्रतिमाः कारितामया

न गौरी न महालक्ष्मीश्चित्रेपि परिलेखिते । प्रतिमाकरणेचैषांनकुरूपो न दुर्भगः ॥

सुसूक्ष्माणि विचित्राणि नोज्ज्वलान्यम्बराण्यपि ।

समर्पितानि विप्रेभ्यो दिव्याम्बरसमृद्धये ॥ २४ ॥

न तिलाश्च घृतेनाक्ताःसुसमिद्धे हुताशने । हुतावै मन्त्रपूताश्च सवपापापनुत्तये ॥

श्रीसूक्तं पावमानीश्च ब्राह्मणोमण्डलानिच । जप्तं पुरुषसूक्तञ्च पापारिशतरुद्रियम् ॥

अश्वत्थसेवानकृतात्यक्तवाचार्कं त्रयोदशीम् । सद्यःपापहरासाहिनरात्रौ न भृगोर्दिने

शयनीथं न चोत्सृष्टं मृदुलाच प्रतूलिका । दीपीदर्पण संयुक्तं सर्वभोगसमृद्धिदम्

अजाश्वमहिषी मेषी दासीकृष्णाजिनं तिलाः ।

सकरम्भास्तोयकुम्भानाऽऽसनं मृदुपादुके ॥ २६ ॥

पादाभ्यङ्गं दीपदानं प्रपादानं विशेषतः । व्यजनंवस्त्रताम्बूलं तथान्यंमुखवासकृत् ॥

नित्यश्राद्धंभूतबलितथाऽतिथिसमर्चनम् । विशन्त्यन्यानिदत्त्वाचप्रशस्यानियमालये

न यमं यमदूतांश्च नयामीरपियातनाः । पश्यन्ति ते पुण्यभाजो नैतच्चापि कृतंमया

कृच्छ्रचान्द्रायणादीनि तथा नक्तव्रतानि च ।

शरीरशुद्धिकारीणि न कृतानि क्वचिन्मया ॥ ३३ ॥



गवाह्निकश्च नोदत्तं गोकण्डूतिर्नवै कृता । नोद्धृतापङ्कमग्नागौर्गौलोकसुखदायिनी

नार्थिनःप्रार्थितैरर्थैःकृतार्थाहिमयाकृताः । देहिदेहीतिजल्पाकोभविष्याम्यन्यजन्मनि

न वेदा न च शास्त्राणि नार्थो दारा न नो सुतः ।

न क्षेत्रं न च हर्म्यादि मा यान्तमनुयास्यति ॥ ३६ ॥

शिवशर्मेति सञ्चिन्त्य बुद्धिं सन्धायसर्वतः । निश्चिकायमनस्येवंभवेत्क्षेमतरं मम

यावत्स्वस्थोऽस्तिमे देहो यावन्नेन्द्रियविक्लवः ।

तावत्स्वश्रेयसां हेतुं तीर्थयात्रां करोम्यहम् ॥ ३८ ॥

दिनानिपञ्चषाण्येवमतिवाह्यगृहेद्विजः । शुभेतिथौ शुभेवारे शुभलग्नबले द्विजः ॥

उपोष्य रजनीमेकां प्रातःश्राद्धं विधाय च ।

गणेशान्ब्राह्मणान्नत्वा भुक्त्वा प्रस्थितवान्सुधीः ॥ ४० ॥

इति निश्चित्य निर्वाणपदनिःश्रेणिकां पराम् ।

सर्वेषामेव जन्तूनां तत्र संस्थितिकारिणाम् ॥ ४१ ॥

अथ पन्थानमाक्रम्य कियन्तमपि स द्विजः ।

मुहूर्तं पथिविश्रम्याऽचिन्तयत्प्राक् क्वयाम्यहम् ॥ ४२ ॥

भुवितीर्थान्यनेकानि लोलमायुश्चलंमनः । ततःसप्तपुरीर्यायां सर्वतीर्थानि तत्र यत्

अयोध्याञ्च पुरीं गत्वा सरयूमवगाह्य च । तत्तत्तीर्थेषु सन्तर्प्य पितृन्पिण्डप्रदानतः

पञ्चरात्रमुषित्वा तु ब्राह्मणान्परिभोज्यच । प्रयागमगमद्विप्रस्तीर्थराजं सुहृष्टवत् ॥

सिताऽसितेसरिच्छ्रेष्ठेयत्रास्तांसुरदुर्लभे । यत्राप्लुतोनरःपापःपरम्ब्रह्माधिगच्छति

क्षेत्रंप्रजापतेः पुण्यंसर्वेषामेवदुर्लभम् । लभ्यतेपुण्यसम्भारैर्नान्यथाऽर्थस्यराशिभिः

दमयन्तीं कलिकालंकलिन्दतनयां शुभाम् ।

आगत्य मिलिता यत्र पुण्या स्वर्गतरङ्गिणी ॥ ४८ ॥

प्रकृष्टं सर्वयागेभ्यः प्रयागमिति गीयते । यज्वनां पुनरावृत्तिर्न प्रयागार्द्रवर्ष्मणाम् ॥

यत्रस्थितःस्वयंसाक्षाच्छूलटङ्कोमहेश्वरः । तत्राप्लुतानांजन्तूनांमोक्षवर्त्मोपदेशकः

तत्राऽक्षय्यवटोऽप्यस्तिसप्तपातालमूलवान् । प्रलयेऽपियमारुह्यमृकण्डतनयोऽवसत्

हिरण्यगर्भो विज्ञेयः स साक्षाद्रुद्ररूपधृक् ।
तत्समीपे द्विजान्भक्त्या सम्भोज्याक्षय्यपुण्यभाक् ॥ ५२ ॥

यत्रलक्ष्मीपतिःसाक्षाद्वैकुण्ठादेत्यमानवान् । श्रीमाधवस्वरूपेणनयेद्विष्णोःपरम्पदम्
श्रुतिभिःपरिपठ्य तेसिताऽसितसरिद्वरे । तत्राप्लुताङ्गाह्यमृतंभवन्तीतिविनिश्चितम्

शिवलोकाद् ब्रह्मलोकादुमालोकवरात्पुनः ।
कुमारलोकाद्वैकुण्ठात्सत्यलोकात्समन्ततः ॥ ५५ ॥
तपोजनमहर्भ्यश्च सर्वे स्वर्लोकवासिनः ।
भुवोलोकाच्च भूर्लोकान्नागलोकात्तथाऽखिलात् ॥ ५६ ॥

अचलाहिभवन्मुख्याः कल्पवृक्षादयोनगाः । स्नातुंमाघे समायान्तिप्रयागमरुणोदये
दिगङ्गनाः प्रार्थयन्तियत्प्रयागानिलानपि । तेपिनःपावयिष्यन्तिकिंकुर्मःपङ्गवोवयम्
अश्वमेधादियागाश्च प्रयागस्य रजःपुनः । तुलितंब्रह्मणापूर्वं न ते तद्रजसासमाः ॥
मज्जागतानिपापानिबहुजन्मार्जितान्यपि । प्रयागनामश्रवणात्क्षीयन्तेऽतीवविह्वलम्
धर्मतीर्थमिदंसम्यगर्थतीर्थमिदं परम् । कामिकं तीर्थमेतच्च मोक्षतीर्थमिदं ध्रुवम् ॥
ब्रह्महत्यादिपापानि तावद्गर्जन्ति देहिषु । यावन्मज्जन्ति नोमाघे प्रयागे पापहारिणि
तद्विष्णोःपरमंपदं सदा पश्यन्ति सूरयः । एतद्यत्पठ्यते वेदे तत्प्रयागं पुनः पुनः ॥
सरस्वतीरजोरूपा तमोरूपाकलिन्दजा । सत्त्वरूपा च गङ्गात्र नयन्तिब्रह्मनिर्गुणम्

इयं वेणी हि निःश्रेणी ब्रह्मणो वर्त्म यास्यतः ।
जन्तोर्विशुद्धदेहस्य श्रद्धाऽश्रद्धाप्लुतस्य च ॥ ६५ ॥

काशीति काचिदबला भुवनेषु रूढा लोलार्ककेशवविलोलविलोचना च ।
तद्दोर्युगश्च वरणासिरियं तदीया वेणीतियाऽत्रगदिताऽक्षयशर्मभूमिः ॥ ६६ ॥

अगस्तिरुवाच

सुधर्मिणि! गुणांस्तस्य कोऽत्र वर्णयितुं क्षमः ।
तीर्थराजप्रयागस्य तीर्थैः संसेवितस्य च ॥ ६७ ॥
पापिनां यानि:पापानि प्रसह्य क्षालितान्यहो !



तच्छुद्धयै सेव्यते तीर्थैःःप्रयागमधिकं ततः ॥ ६८ ॥
प्रयागस्य गुणाञ्ज्ञात्वा शिवशर्माद्विजः सुधीः ।
तत्र माघमुषित्वाऽथ प्राप वाराणसीं पुरीम् ॥ ६९ ॥

प्रवेशएवसम्वीक्ष्य सदेहलिविनायकम् । अन्वलिम्पत्ततोभक्त्यासाज्यसिन्दूरकर्दमैः
निवेद्य मोदकान्पञ्चवञ्चयन्तं निजं जनम् । महोपसर्गवर्गेभ्यस्ततोऽन्तःक्षेत्रमाविशत्

आगत्य दृष्ट्वा मणिकर्णिकायामुदग्वहांस्वर्गतरङ्गिणीं सः ।
संक्षीणपुण्येतरपुण्यकर्मणां नृणां गणैःस्थाणुगणैरिवावृताम् ॥ ७२ ॥
सचैलमाप्लुत्यजलेऽमलेऽमलेऽविलम्बमालम्बितशुद्धबुद्धिः ।
सन्तर्प्य देवर्षिमनुष्यदिव्यपितॄन्पितॄन्स्वान्स हि कर्मकाण्डवित् ॥ ७३ ॥
विधाय च द्राक् स हि पञ्चतीर्थिकां विश्वेशमाराध्य ततो यथास्वयम् ।
पुनःपुनर्वीक्ष्य पुरीं पुरारेरिदं मयाऽलोकि नवेति विस्मितः ॥ ७४ ॥
नस्वःपुरीसात्वनया पुरासमंसमञ्जसापिप्रतिसाम्यमावहेत् ।
प्रबन्धभेदद्व्यतिरिक्तपुस्तकप्रतिर्यथासल्लिपिभेदभङ्गतः ॥ ७५ ॥
पयोपि यत्रत्यमचिन्त्यवैभवं दिविस्थितासाधुसुधाप्यते मुधा ।
तथाप्रसूतेस्तुपयोधरे पयो न पीयते पीतमिदं यदि क्वचित् ॥ ७६ ॥
अनामयाश्चिन्तनया नयेशितुर्जनामनाग्यत्र विना पिनाकिना ।
न कर्मसत्कर्मकृतोपि कुर्वतेऽनुकुर्वते सर्वगणांश्च सर्वतः ॥ ७७ ॥
न वर्ण्यते कैःकिल काशिकेयं जन्तोःस्थितस्यात्र यतोऽन्तकाले ।
पचेलिमैःप्राक्तपुण्यभारैरोङ्कारमोङ्कारयतीन्दुमौलिः ॥ ७८ ॥
संसारिचिन्तामणिरत्र यस्मात्तं तारकं सज्जनकर्णिकायाम् ।
शिवोभिधत्ते सहसान्तकाले तद्गीयतेऽसौ मणिकर्णिकेति ॥ ७९ ॥

मुक्तिलक्ष्मीमहापीठमणिस्तच्चरणाब्जयोः । कर्णिकेयंततःप्राहुर्यांजनामणिकर्णिकाम्
जरायुजाण्डजोद्भिज्जाःस्वेदजाह्यत्र वासिनः । नसमामोक्षभाजस्तेत्रिदशैर्मुक्तिदुर्दशैः
ममजन्मवृथाजातं दुर्वृत्तस्यजडात्मनः । नाद्ययावन्मयैक्षिष्टकाशिकामुक्तिकाशिका

पुनःपुनश्च तत्क्षेत्रमतिथीकृत्य नेत्रयोः । विचित्रं च पवित्रं च तृप्तिं नाधिजगाम ह
सप्तानां च पुरीणां हि धुरीणामवयाम्यहम् ।
वाराणसीं सुनिर्वाणविश्राणनविचक्षणाम् ॥ ८४ ॥
तथापिनवतस्त्रोऽन्यामयाद्गोचरीकृताः । तासांप्रभावंविज्ञायाप्यागमिष्याम्यहंपुनः
तीर्थयात्रां प्रतिदिनं कुर्वन्नूनं सवत्सरम् ।
न प्राप सर्वतीर्थानि तीर्थं काश्यां तिले तिले ॥ ८६ ॥

अगस्तिरुवाच

जानन्नपि गुणान्देवि ! क्षेत्रस्याऽस्य पराग्द्विजः ।
नानाप्रमाणैः प्रवणो निरगात्स तथाप्यहो ॥ ८७ ॥
किंकुर्वन्ति हि शास्त्राणि सप्रमाणानि सुन्दरि !।
महामायां भवित्रीं तां को निवारयितुं क्षमः ॥ ८८ ॥
कः समुच्चलितश्चेतस्तोयं वासं प्रतीपयेत् ।
प्रोच्चस्थानस्थितमपि स्वभावो यच्चलस्तयोः ॥ ८९ ॥
शिवशर्मात्रजन्सोऽथदेशाद्देशान्तरंक्रमात् । महाकालपुरींप्रापकलिकालविवर्जिताम्
कल्पे कल्पेऽखिलं विश्वं कालयेद्यः स्वलीलया ।
तं कालं कलयित्वा यो महाकालोऽभवत्किल ॥ ९१ ॥
पापादवन्तीं साविश्वमवन्तीतिनिगद्यते । युगेयुगेन्यनाम्नीसा कलावुज्जयिनीतिच
विपन्नो यत्र वै जन्तुः प्राप्यापि शवतां स्फुटम् ।
न पूतिगन्धमाप्नोति समुच्छ्रयति न क्वचित् ॥ ९३ ॥
यमदूतानयस्यांहिप्रविशन्तिकदाचन । परः कोटीनिलिङ्गानितस्यां सन्ति पदेपदे
हाटकेशोमहाकालस्तारकेशस्तथैव च ।
एकं लिङ्गं त्रिधा भूत्वा त्रिलोकीं व्याप्य संस्थितम् ॥ ९५ ॥
ज्योतिः सिद्धवटे ज्योतिस्ते पश्यन्तीह ये द्विजाः ।
अथवा श्रीमहाकालद्रष्टारः पुण्यराशयः ॥ ९६ ॥



महाकालस्य तल्लिङ्गं यैर्दृष्टंकधिभिः क्वचित् ।
न स्पृष्टास्ते महापापैर्न दृष्टास्ते यमोद्भटैः ॥ ९७ ॥
महाकालपताकाग्रैः स्पृष्टपृष्ठास्तुरङ्गमाः । अरुणस्यकशाघातं क्षणंविश्रमयन्ति खे॥
महाकालमहाकालमहाकालेतिसन्ततम् । स्मरतःस्मरहोनित्यंस्मरकर्तृस्मरान्तकौ
एवमाराध्य भूतेशं महाकालं ततो द्विजः । जगाम नगरींकान्तींकान्तांत्रिभुवनादपि
लक्ष्मीकान्तः स्वयं साक्षाज्जन्तूंस्तत्र निवासिनः ।
श्रीकान्तानेव कुरुते परत्रेह च निश्चितम् ॥ १०१ ॥
दृष्ट्वा कान्तीं कान्तिमतीं कान्तिमद्भिर्निषेविताम् ।
कान्तिमानभवत्सोऽपि नाऽकान्तिस्तत्र कस्यचित् ॥ १०२ ॥
तत्रकृत्यश्च यत्कृत्यं तत्कृत्वा सर्वकृत्यवित् । सप्तरात्रमुषित्वातुययौद्वारवतींपुरीम्
चतुर्णामपि वर्णाणां यत्रद्वाराणिसर्वतः । अतोद्वारवतीत्युक्ता विद्वद्भिस्तत्त्ववेदिभिः
अस्थीन्यपिचजन्तूनांयत्रचक्राङ्कितान्यहो । किंचित्रंतत्रयत्रस्युःशङ्खचक्राङ्कितैःकरैः
अन्तकः शिक्षयत्येवं निजदूतान्मुहुर्मुहुः ।
ते त्याज्या यैर्द्वारवत्या नामापि परिगृह्यते ॥ १०६ ॥
श्रीखण्डे क्व स आमोदः स्वर्णे वर्णः क्व तादृशः ।
तत्पावित्र्यं क्व वै तीर्थे तद्गोपीचन्दने यथा ॥ १०७ ॥
दूताःशृण्वन्तुयद्भालंगोपीचन्दनलाञ्छितम्। ज्वलदिङ्गलवत्सोपिदूरेत्याज्यःप्रयत्नतः
तुलस्यलङ्कृता येये तुलसीनामजापकाः । तुलसीवनपालाये ते त्याज्यादूरतोभटाः
युगेयुगे द्वारवत्या रत्नानिपरितो मुषन् । अब्धीरत्नाकरोद्यापि लोकेषुपरिगीयते ॥
द्वारवत्यां म्रियन्तेयेजन्तवःकालनोदिताः ।चतुर्भुजाःस्युर्वैकुण्ठेतेपीताम्बरधारिणः
तत्रापि सन्तर्प्यपितॄन्ससदेवर्षिमानवान् । तत्र तेषु च तीर्थेषु सस्नौसर्वेष्वतन्द्रितः
ततो मायापुरीं प्राप्तो दुष्प्रापां पापकारिभिः ।
यत्र सा वैष्णवी माया मायापाशैर्न पाशयेत् ॥ ११३ ॥
केचिदूचुर्हरिद्वारं मोक्षद्वारं ततःपरे । गङ्गाद्वारञ्च केप्याहुः केचिन्मायापुरीं पुनः ॥

यतोविनिर्गतागङ्गाख्याताभागीरथीभुवि । यन्नामोच्चारणात्पुंसांपापंयातिसहस्रधा
वैकुण्ठस्यैकसोपानं हरिद्वारंजगुर्जनाः । अत्राप्लुतानरायान्तितद्विष्णोःपरमम्पदम्
तीर्थोपवासकंकृत्वानिशाजागरणंतथा । प्रातःस्नात्वाचगङ्गायां तर्प्यान्सन्तर्प्यसर्वतः
यावत्स पारणंकर्तुमियेष द्विजसत्तमः । तावच्छीतज्वराक्रान्तश्चकम्पेऽत्यर्थमातुरः

वैदेशिकस्तथैकाकी तथाऽतिज्वरपीडितः ।
चिन्तामवाप महतीं किमेतत्समुपस्थितम् ॥ ११६ ॥

चिन्तार्णवे निमग्नोभूत्त्यक्ताशोजीवितेधने । सांयात्रिकइवागाधे भिन्नप्रोतोमहार्णवे
क्व क्षेत्रं क्व कलत्रं मे क्व पुत्राः क्वचतद्वसु । क्वतद्विचित्रं वैहर्म्यंक्वसापुस्तकसम्भृतिः
अद्यापिनायुः पर्याप्तं पलितं न तथा मयि । ज्वरोऽयंदारुणःप्राप्तःकालश्चातिदारुणः

मृत्युर्मूर्ध्नि कृतावासो वासो दूरे व्यवस्थितः ।
अग्नौ गृहोपरि प्राप्ते कूपं तुखनयेदिह ॥ १२३ ॥

किमेभिश्चिन्तनैर्व्यर्थैरतितापकरैर्मम । चिन्तयामि हृषीकेशं शिवदं शिवमेव च ॥
अथवामुक्त्युपायो वै मयैकः सदनुष्ठितः । मुक्तिपुर्यस्तुसप्तैता स्वनेत्रविषयीकृताः
स्वर्गापवर्गयोरेकः साध्यो हि विदुषाध्रुवम् । तयोरसाधनेपश्चात्सन्तापेनचतप्यते
अथवा चिन्तया किं मे त्वनया दुरवस्थया । रणेवा मरणं श्रेयस्तार्थे वात्रयथामम

किमहं मन्दभागीव रथ्यां क्वापि म्रियेऽधुना ।
भागीरथ्यां म्रिये वाद्य का चिन्ता मम मूढवत् ॥ १२८ ॥

चर्मास्थिसञ्चये नाहमनेनवपुषाध्रुवम् । प्राप्स्यामिनिधनादत्रसिद्धिंनैःश्रेयसींध्रुवम्
एवंचिन्तयतस्तस्यपाडासीदतिदारुणा । कोटिवृश्चिकदष्टस्ययावस्थातामवापसः
स्मर्त्तव्यं विस्मृतंसर्वंक्वाहंकोहंनवेत्तिच । दिनानिसप्तसप्तेति स्थित्वापञ्चत्वमागतः

तावद्वैकुण्ठभुवनाद्विमानं समुपस्थितम् ।
तार्क्ष्यापलक्षितो यत्र ध्वजश्चातिसमुच्छ्रितः ॥ १३२ ॥
अधिष्ठितं सुकन्यानां स्वर्णकौशेयवाससाम् ।
चामरव्यग्रहस्तानां स सहस्रेणातिविस्तृतम् ॥ १३३ ॥



पुण्यशीलसुशीलाभ्यां गणाभ्यां च विराजितम् ।
चतुर्भुजाभ्यां स्वास्याभ्यां किङ्किणीजालमालितम् ॥ १३४ ॥

तद्विमानमथारुह्य पीतवासाश्चतुर्भुजः । अलञ्चक्रे नभोवर्त्म सद्विजो दिव्यभूषणः
इति श्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखण्डे
सप्तपुरीवर्णनेशिवशर्मविप्रकथानकवर्णनंनाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः

### यमलोकवर्णनम्

लोपामुद्रोवाच

जीवितेश ! कथामेतां पुण्यां पुण्यपुरीश्रिताम् ।
न तृप्तिमधिगच्छामि श्रुत्वा त्वच्छ्रीमुखेरिताम् ॥ १ ॥

मायापुर्यांमुक्तिपुर्यांशिवशर्माद्विजोत्तमः । मृतोपिमोक्षंनैवाप ब्रूहितत्कारणम्विभो!

अगस्त्य उवाच

साक्षान्मोक्षोनचैतासुपुरीषु प्रियभाषिणि !। पुरोद्दिश्यामुमेवार्थमितिहासोमयाश्रुतः

श्रृणु कान्ते! विचित्रार्थां कथां पापप्रणाशिनीम् ।
पुण्यशीलसुशीलाभ्यां कथितां शिवशर्मणे ॥ ४ ॥

शिवशर्मोवाच

अयिविष्णुगणौ पुण्यौ पुण्डरीकदलेक्षणौ । किञ्चिद्विज्ञप्तुकामोऽहंप्रबद्धकरसम्पुटः
ननाम युवयोर्वेद्मि वेद्म्याकृत्याचकिञ्चन । पुण्यशीलसुशीलाख्यौयुवांभवितुमर्हथः

गणावूचतुः

भगवद्भक्तियुक्तानां किमज्ञातं भवादृशाम् । एतदेव हि नौ नाम यदुक्तं श्रीमता त्वया
यदन्यदपि ते चित्ते प्रष्टव्यं तदशङ्कितम् । सम्प्रच्छस्वमहाप्राज्ञ! प्रीत्यातत्प्रब्रवावहे

इति श्रुत्वास वचनं भगवद्गणभाषितम् । अतिप्रीतिकरं हृद्यं ततस्तौप्रत्युवाचह ॥

दिव्यद्विज उवाच

क एष लोकोऽल्पश्रीकःस्वल्पपुण्यजनाकृतिः । कइमेविकृताकाराब्रूतमेतन्ममाग्रतः

गणावूचतुः

अयंपिशाचलोकोत्रवसन्तिपिशिताशनाः । दत्त्वानुतापभाजोयेनोनो कृत्वाददत्यपि

शिवं प्रसङ्गतोऽभ्यर्च्य सकृत्त्वशुचिचेतसः ।

अल्पपुण्याल्पलक्ष्मीकाःपिशाचास्तइमे सखे !॥ १२ ॥

ततो गच्छन्ददर्शाग्रे हृष्टपुष्टजनावृतम् । पिचण्डिलैःस्थूलवक्त्रैर्मेघगम्भीरर्नःस्वनैः

लोकैरध्युषितंलोकं श्यामलाङ्गैश्च लोमशैः ।

गणौ कथयतां केऽमी को लोकःपुण्यतःकुतः ॥ ॥ १४ ॥

गणावूचतुः

गुह्यकानामयंलोकस्त्वेतेवैगुह्यकास्मृताः । न्यायेनोपार्ज्यवित्तानिगूहयन्तिचयेभुवि

स्वमार्गगा धनाढ्याश्च शूद्रप्रायाःकुटुम्बिनः ।

संविभज्य च भोक्तारः क्रोधासूयाविवर्जिताः ॥ १६ ॥

न तिथिन्नैववारश्च संक्रान्त्या दिन पर्वच । नाधर्मं न च धर्मश्चविदन्त्येतेसदासुखाः

एकमेव हि जानन्ति कुलपूज्यो हि यो द्विजः ।

तस्मै गाः सम्प्रयच्छन्ति मन्यन्ते तद्वचः स्फुटम् ॥ १८ ॥

समृद्धिभाजो ह्यत्रापि तेनपुण्येनगुह्यकाः । भुञ्जते स्वर्गसौख्यानिदेववच्चाकुतोभयाः

ततो विलोकयामास लोकं लोचनशर्मदम् ।

केऽमी जनास्त्वसौ लोकः किंनामावदतां गणौ !॥ २० ॥

गणावूचतुः

गान्धर्वस्त्वेष लोकोऽमी गन्धर्वाश्चशुभव्रताः ।

देवानां गायना ह्येते चारणाः स्तुतिपाठकाः ॥ २१ ॥

गीतज्ञाअतिगीतेनतोषयन्तिनराधिपान् । स्तुवन्तिचधनाढ्यांश्चधनलोभेनमोहिताः



राज्ञां प्रसादलब्धानि सुवासांसि धनान्यपि ।

द्रव्याण्यपि सुगन्धीनि कर्पूरादीन्यनेकशः ॥ २३ ॥

ब्राह्मणेभ्यः प्रयच्छन्तिगीतंगायन्त्यहर्निशम् । श्रुतावेवमनस्तेषांनाऽन्यशास्त्रकृतश्रमाः

तेन पुण्येन गान्धर्वो लोकस्त्वेषां विशिष्यते ।

ब्राह्मणास्तोषिता यद्वै गीतविद्यार्जितैर्धनैः ॥ २५ ॥

गीतविद्याप्रभावेन देवर्षिर्नारदो महान् । मान्योवैष्णवलोकेवै श्रीशम्भोश्चातिवल्लभः

तुम्बुरुर्नारदश्चोभौ देवानामतिदुर्लभौ । नादरूपीशिवः साक्षान्नादतत्त्वविदौहितौ

यदि गीतंक्वचिद्गीतं श्रीमद्धरिहरान्तिके । मोक्षस्तुतत्फलंप्राहुः सान्निध्यमथवातयोः

गीतज्ञो यदि गीतेन नाप्नोति परमम्पदम् । रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते

अस्मिँल्लोके सदाकालं स्मृतिरेषा प्रगीयते । तद्गीतमालया पूज्यौ देवौहरिहरौसदा

इतिशृण्वन्क्षणात्प्रापपुनरन्यन्मनोहरम् । शिवशर्माथपप्रच्छकिंसञ्ज्ञं नगरन्त्विदम्

गणावूचतुः

असौवैद्याधरोलोको नानाविद्याविशारदाः । एतेविद्यार्थिनामन्नमुपानद्वस्त्रकम्बलम्

औषधान्यपि यच्छन्ति तत्पीडाशमनानि हि ।

नानाकलाः शिक्षयन्ति विद्यागर्वविवर्जिताः ॥ ३३ ॥

शिष्यंपुत्रेणपश्यन्ति वस्त्रताम्बूलभोजनैः । अलङ्कृताश्चसत्कन्याधर्मादुद्वाहयन्तिच

अभिलाषधिया नित्यं पूजयन्तीष्टदेवताः । एतैःपुण्यैर्वसन्तीह विद्याधरवराइमे ॥

यावदित्थं कथां चक्रुस्तावत्संयमिनीपतिः ।

धर्मराजोऽभिसम्प्राप्तो देवदुन्दुभिनिःस्वनैः ॥ ३६ ॥

सौम्यमूर्तिर्विमानस्थो धर्मज्ञैःपरिवारितः । सेवाकर्मसु चतुरैर्भृत्यैश्चिचतुरैः सह

धर्मराज उवाच

साधुसाधुमहाबुद्धे!शिवशर्मन्!द्विजोत्तम !। कुलोचितंब्राह्मणानांभवताप्रतिपादितम्

वेदाभ्यासः कृतःपूर्वं गुरवश्चापितोषिताः । धर्मशास्त्रपुराणेषु दृष्टोधर्मस्त्वयाऽऽदृतः

क्षालितं मुक्तिपुर्यद्भिराशुगन्तृशरीरकम् । कोविदोऽस्तिभवानेव जीवितेजीवितेतरे

कलेवरंपूतिगन्धि सदैवाशुचिभाजनम् । सुतीर्थपुण्यपण्येन सम्यग्विनिमितं त्वया
अतएवहिपाण्डित्यमाद्रियन्ते विचक्षणाः । अहःक्षेपंन क्षिपन्तिक्षणमेकंहिते वुधाः

निमेषान्पञ्चषान् मर्त्ये प्राणन्ति प्राणिनो ध्रुवम् ।
तत्राऽपि न प्रवर्तेयुरघकर्मणि गर्हिते ॥ ४३ ॥

स्थिरापायः सदाकायो नधनं निधनेऽवति । तन्मूढःप्रौढकार्ये किं नयतेतभवानिव
सत्वरङ्गत्वरश्चायुर्लोकः शोकसमाकुलः । तस्माद्धर्ममतिःकार्या भवतेवसुधार्मिकैः
सत्कर्मणोविपाकोऽयं तववन्द्यौममाप्यहो । यदेतौभगवद्भक्तौ सखित्वंभवतोगतौ
ममाज्ञादीयतां तस्मात्साहाय्यंकरवाणिकिम् । यत्कर्तव्यंमादृशैस्तेतत्कृतंभवतैवहि
अद्य धन्यतरोऽस्मीह यद्दृष्टौ भगवद्गणौ । सेवा सदैवमे ज्ञाप्याश्रीमच्चरणसन्निधौ

ततः प्रस्थापितस्ताभ्यां प्राविशत्स्वपुरीं यमः ।
अप्राक्षीच्च ततो विप्रस्तौ गणौ प्रस्थिते यमे ॥ ४६ ॥

शिवशर्मोवाच

साक्षादयं धर्मराजो ननुसौम्यतराकृतिः । धर्माण्येववचांस्यस्यमनःप्रीतिकराणिच
पुरी संयमनीसेयमतीव शुभलक्षणा । आकर्ण्ययस्यनामापिपापिनोऽतीवबिभ्यति
यमरूपं वर्णयन्ति मर्त्यलोकेऽन्यथाजनाः । अन्यथाऽयं मयादृष्टो ब्रूतंतत्कारणंगणौ

के न पश्यन्त्यमुं लोकं निवसन्ति तथाऽत्र के ।
इदमेवास्य किं रूपं किञ्चान्यच्च निवेद्यताम् ॥ ५३ ॥

गणावूचतुः

शृणु सौम्य! सुसौम्योऽसौ दृश्यतेऽत्र भवादृशैः ।
धर्ममूर्तिः प्रकृत्यैव निःशङ्कैः पुण्यराशिभिः ॥ ५४ ॥

अयमेव हि पिङ्गाक्षः क्रोधरक्तान्तलोचनः । दंष्ट्राकरालवदनो विद्युल्ललनभीषणः ॥

उर्ध्वकेशोऽतिकृष्णाङ्गः प्रलयाम्बुदनिःस्वनः ।
कालदण्डोद्यतकरो भ्रुकुटीकुटिलाननः ॥ ५६ ॥

आनयैनं पातयैनं बधानामुञ्चदुर्दम! । घातयेनं सुदुर्वृत्तं मूर्ध्नि तीव्रमयोघनैः ॥५७॥



आताडयैनं दुर्वृत्तं धृत्वा पादौशिलातले । उत्पाटयास्य नेत्रेत्वं निधायचरणंगले
एतस्यगल्लावुत्फुल्लौ क्षुरेणाशुविपाटय । पाशेन कण्ठं बद्ध्वास्य समुल्लम्बय भूरुहे
विदारयास्य मूर्धानंकरपात्रेणदारुवत् । पार्ष्णिघातैर्घ्नतास्यास्यंसमुच्चूर्णयदारुणैः
परदारप्रसृमरं करंछिन्ध्यस्य पापिनः । परदारगृहं यातुः पादौचास्यविखण्डय ॥
सूचीभी रोमकूपेषु तनुं व्यधिहि सर्वतः । दातुः परकलत्राङ्गे नखपङ्क्तीर्दुरात्मनः
परदारमुखाघ्रातुर्मुखे निष्ठीवयास्य हि । वक्तुःपरापवादस्य कीलं तीक्ष्णंमुखेक्षिप
भर्जयनश्चणकवत्तप्तबालुककर्परैः । भ्राष्ट्रे विकटवक्त्रत्वं परसन्तापकारिणम् ॥६४

दोषारोपं सदा कर्तुरदोषे क्रूरलोचन !।
निमज्जयास्य वदनं पूयशोणितकर्दमे ॥ ६५ ॥

अदत्तपरवस्तूनां गृह्णतः करपल्लवम् । आप्लुत्याप्लुत्य तैलेन तप्ताङ्गारे पचोत्कट ॥
अपवादं गुरोर्वक्तुर्निन्दाकर्तुः सुपर्वणाम् । तप्तलोहशलाकाश्च मुखेभीषण! निक्षिप
परमर्मस्पृशश्चास्य परच्छिद्रंप्रकाशितुः । सुतप्तायो मयाञ्छङ्कून्सर्वसन्धिषुरोपय

अन्येन दीयमाने स्वे निषेद्धुः पापकारिणः ।
आच्छेत्तुः परवृत्तीनां जिह्वाञ्छिन्ध्यस्य दुर्मुख !॥ ६६ ॥
देवस्वभोक्तुः क्रोडास्य ! ब्राह्मणस्वस्यभोजिनः ।
विदार्योदरमस्याशु विट्कीटैः परिपूरय ॥ ७० ॥

न देवार्थे न विप्रार्थेनातिथ्यर्थेपचेत्कचित् । तममुंस्वार्थपक्तारं कुम्भीपाकेपचान्धक
उग्रास्य शिशुहन्तारममुं विश्रम्भघातिनम् । कृतघ्नं नय वेगेन महारौरवरौरवम् ॥
ब्रह्मघ्नं चान्धतामिस्रे सुरापं पूयशोणिते । कालसूत्रे हेमचौरमवीचौगुरुतल्पगम्
तत्संसर्गिणमावर्षमसिपत्रवने तथा । एतान्महापातकिनस्तप्ततैलकटाहके ॥ ७४ ॥

आप्लुत्याप्लुत्य दुर्दंष्ट्र! काकोलैर्लोहतुण्डकैः ।
सन्तोद्यमानान्पापिष्ठान् नित्यं कल्पं निवासय ॥ ७५ ॥

स्त्रीघ्नंगोघ्नं च मित्रघ्नंकूटशाल्मलिपादपे । उल्लम्बयचिरंकालमूर्ध्वपादमधोमुखम्
त्वचमस्य च संदंशैस्त्रोटयत्वं महाभुज !। आश्लेषितुर्मित्रपत्न्याभुजावुत्पाटयाशुच

ज्वालाकीले महाघोरे नरकेऽमुं निपातय । योवह्निनादाहयति परक्षेत्रं परालयम् ॥
कालकूटे च गरदं कूटसाक्ष्याभिवादिनम् । मानकूटं तुलाकूटं कण्ठमोटेन पातय
लालापिबेच दुष्प्रेक्ष्य तीर्थाप्सुष्ठीविनंनय । आमपाकेचगर्भघ्नंशूलपाकेऽन्यतापिनम्
रसविक्रयिणं विप्रमिक्षुयन्त्रे प्रपीडय । प्रजापीडाकरं भूपमन्धकूपे निपातय ॥ ८१
गोतिलांश्चतुरङ्गांश्च विक्रेतारंद्विजाधमम् । मातुलान्याःसुरायाश्चविक्रेतारंहलायुध!
मुसलोलूखले वैश्यं कण्डयैनं पुनःपुनः । शूद्रं द्विजावमन्तारं द्विजाग्रे मञ्चसेविनम्

अधोमुखे च नरके दीर्घग्रीव! प्रपीडय ॥ ८४ ॥

शूद्रं ब्राह्मणजेतारं वैश्यं ब्राह्मणमानिनम् । क्षत्रियं याजकञ्चापि विप्रंवेदविवर्जितम्
लाक्षालवणमांसानांसतैलविषसर्पिषाम् । आयुधेक्षुविकाराणांविक्रेतारंद्विजाधमम्
पाशपाणेकशापाणे बद्ध्वैतांश्चरणेदृढम् । घातयन्तौ कशाघातैर्नयतं तप्तकर्दमे
इमांस्त्रियं श्लेषयाशु पुंश्चलींकुलकल्मषाम् । तेनोपपतिना सार्धं तप्तायसमयेन च
स्वयंगृहीत्वा नियमं यस्त्यजेदजितेन्द्रियः । तं प्रापय दुराधर्षं बहुभ्रमरदंशके॥
इत्यादिजल्पन्दुर्वृत्तैःश्रूयते दूरतोयमः । स्वकर्मशङ्कितैःपापैर्दृश्यतेतिभयङ्करः ॥
येप्रजाःपालयन्तीह पुत्रानेवनिजौरसान् । दण्डयन्तिचधर्मेणभूपास्तेऽस्यसभासदः

वर्णाश्रमाश्च यद्राष्ट्रेऽनुतिष्ठन्ति निजां क्रियाम् ।
कालेनापन्ननिधना भूपास्तेऽस्य सभासदः ॥ ९१ ॥
नैव दीनो न दुर्वृत्तो नापद्ग्रस्तो न शोकभाक् ।
येषां राष्ट्रे प्रदृश्यन्तु भूपास्तेऽस्य सभासदः ॥ ९३ ॥

ब्राह्मणाःक्षत्रियावैश्याःस्वधर्मनिरताःसदा । अन्येपियेसंयमिनःसंयमिन्यांवसन्तितै
उशीनरःसुधन्वा च वृषपर्वा जयद्रथः । रजिःसहस्रजित्कुक्षिर्दृढधन्वा रिपुञ्जयः
युवनाश्वोदन्तवक्त्रो नाभागो रिपुमङ्गलः । करन्धमो धर्मसेनःपरमर्दः परान्तकः ॥
एते चान्ये च बहवो राजानोनीतिवर्तिनः । धर्माधर्मविचारज्ञाः सुधर्मायां समासते

अन्यच्च ते प्रवक्ष्यावो ये न पश्यन्ति भास्करिम् ।
दण्डपाशोद्यतकरान् दूतानुग्राननान्क्कचित् ॥ ९८ ॥



गोविन्दमाधवमुकुन्दहरेमुरारे! शम्भो! शिवेश! शशिशेखर! शूलपाणे !।
दामोदराच्युत! जनार्दन! वासुदेव! त्याज्या भटा य इति सन्ततमामनन्ति ॥
गङ्गाधरान्धकरिपो! हर ! नीलकण्ठ ! वैकुण्ठ ! कैटभरिपो ! कमठाब्जपाणे ! ।
भूतेश!खण्डपरशो! मृड! चण्डिकेश ! त्याज्या भटा य इतिसन्ततमामनन्ति ॥
विष्णो! नृसिंह! मधुसूदन! चक्रपाणे! गौरीपते! गिरिश! शङ्कर! चन्द्रचूड !।
नारायणासुरनिबर्हण! शार्ङ्गपाणे! त्याज्या भटा य इति सन्ततमामनन्ति ॥ १०१ ॥
मृत्युञ्जयोग्रविषमेक्षण! कामशत्रो ! श्रीकान्त!पीतवसनाम्बुदनीलशौरे !।
ईशान!कृत्तिवसन! त्रिदशैकनाथ! त्याज्या भटा य इति सन्ततमामनन्ति ॥१०२
लक्ष्मीपते! मधुरिपो! पुरुषोत्तमाद्य ! श्रीकण्ठ! दिग्वसन! शान्तपिनाकपाणे! ।
आनन्दकन्द ! धरणीधर ! पद्मनाभ! त्याज्या भटा य इति सन्ततमामनन्ति ॥
सर्वेश्वर! त्रिपुरसूदन! देवदेव! ब्रह्मण्यदेव! गरुडध्वज! शङ्खपाणे! ।
त्र्यक्षोरगाभरणबालमृगाङ्कमौले! त्याज्या भटा य इति सन्ततमामनन्ति ॥
श्रीरामराघवरमेश्वर! रावणारे! भूतेश!मन्मथरिपो! प्रमथाधिनाथ! ।
चाणूरमर्दनहृषीकपते!मुरारे! त्याज्या भटा य इति सन्ततमामनन्ति ॥ १०५ ॥
शूलिन्! गिरीश! रजनीशकलावतंस! कंसप्रणाशन! सनातन! केशिनाश !।
भर्ग! त्रिनेत्र! भव!भूतपते! पुरारे! त्याज्या भटा य इति सन्ततमामनन्ति॥१०६
गोपीपते! यदुपते! वसुदेवसूनो! कर्पूरगौर! वृषभध्वज! भालनेत्र! ।
गोवर्द्धनोद्धरण!धर्मधुरीण ! गोप ! त्याज्या भटा य इति सन्ततमामनन्ति ॥
स्थाणो! त्रिलोचन! पिनाकधर! स्मरारे! कृष्णानिरुद्ध! कमलाकर!कल्मषारे !
विश्वेश्वर! त्रिपथगार्द्रजटाकलाप! त्याज्या भटा य इति सन्ततमामनन्ति ॥
अष्टोत्तराधिकशतेन सुचारुनाम्नां संदर्भितां ललितरत्नकदम्बकेन ।
सन्नायकां दृढगुणां द्विजकण्ठगां यःकुर्यादिमां स्रजमहो स यमं न पश्येत् ॥
इत्थं द्विजेन्द्रनिजभृत्यगणान् सदैवसंशिक्षयेदवनिगान्सहि धर्मराजः ।
अन्येऽपि ये हरिहराङ्कधराधरायां ते दूरतःपुनरहो परिवर्जनीयाः ॥ ११० ॥

अगस्तिरुवाच

यो धर्मराजरचितां ललितप्रबन्धां नामावलीं सकलकल्मषबीजहन्त्रीम् ।
धीरोऽत्र कौस्तुभभृतः शशिभूषणस्य नित्यं जपेत्स्तनरसं स पिबेन्न मातुः ॥

इति शृण्वन्कथां रम्यां शिवशर्मा प्रियेऽनघाम् ।
प्रहृष्टवक्त्रः पुरतो ददर्शाप्सरसां पुरीम् ॥ ११२ ॥

इतिश्रीस्कान्देमहापुराण एकाशीतिसाहस्र्यांसंहितायां चतुर्थे काशीखण्डे पूर्वार्द्धे यमलोकवर्णनं नामाऽष्टमोऽध्यायः ॥ ८ ॥

---

# नवमोऽध्यायः

## अप्सरःसूर्यलोकवर्णनम्

शिवशर्मोवाच

का इमा रूपलावण्यसौभाग्यनिधयःस्त्रियः ।
दिव्यालङ्कारधारिण्यो दिव्यभोगसमन्विताः ॥ १ ॥

गणावूचतुः

एतावारविलासिन्योयज्ञभाजांप्रियङ्कराः । गीतज्ञा नृत्यकुशलावाद्यविद्याविचक्षणाः कामकेलिकलाभिज्ञा द्यूतविद्याविशारदाः । रसज्ञा भाववेदिन्यश्चतुराश्चोचितोक्तिषु नानादेशविशेषज्ञा नानाभाषासु कोविदाः । सङ्केतोदन्तनिपुणानैकाःस्वैरचरामुदा लीलानर्मसु साभिज्ञाः सुप्रलापेषुपण्डिताः । यूनांमनांसिसततंस्वैर्हावैरमयन्त्यमूः

निर्मथ्यमानात्क्षीरोदात्पूर्वमप्सरसस्त्वमूः ।
निःसृतास्त्रिजगज्जेतुर्मोहनास्त्रं मनोभुवः ॥ ६ ॥

उर्वशीमेनकारम्भाचन्द्रलेखातिलोत्तमा । वपुष्मतीकान्तिमती लीलावत्युत्पलावती अलम्बुषागुणवतीस्थूलकेशीकलावती । कलानिधिर्गुणनिधिः कर्पूरतिलकोर्वरा



अनङ्गलतिकाचापि तथा मदनमोहिनी । चकोराक्षी चन्द्रकला तथा मुनिमनोहरा ग्रावद्रावातपोद्वेष्ट्रीचारुनासासुकर्णिका । दारुसञ्जीविनीसुश्रीः क्रतुशुल्काशुभानना तपःशुल्का तीर्थशुल्कादानशुल्काहिमावती । पञ्चाश्वमेधिकाचैवराजसूयार्थिनीतथा अष्टाग्निहोमिका तद्वद्वाजपेयशतोद्भवा । इत्याद्यप्सरसां श्रेष्ठंसहस्रं षष्टिसम्मितम्

एतस्मिन्नप्सरो लोके वसन्त्यन्या अपि स्त्रियः ।
सदा स्खलितलावण्याः सदास्खलितयौवनाः ॥ १३ ॥

दिव्याम्बरा दिव्यमाल्या दिव्यगन्धानुलेपनाः ।
दिव्यभोगैः सुसम्पन्नाः स्वेच्छाविधृतविग्रहाः ॥ १४ ॥

कृत्वामासोपवासानिस्खलन्तिब्रह्मचर्यतः । सकृदेवद्विकृत्वोवात्रिःकृत्वोदैवयोगतः

ता इमा दिव्यभोगिन्यो रूपलावण्यसम्पदः ।
निवसन्त्यप्सरोलोके सर्वकामसमन्विताः ॥ १६ ॥

कृत्वा व्रतानि साङ्गानि कामिकानि विधानतः ।
भवन्ति स्वैरचारिण्यो देवभोग्या इहागताः ॥ १७ ॥

पतिव्रतधृता नार्यो बलेनबलिना वृताः । भर्तृबुद्ध्यारमन्ते तं कदाचित्ताइमा द्विज भर्तरिप्रोषिते याश्चब्रह्मचर्यव्रताः सदा । विप्लवन्ते सकृद्दैवात्ता एता वामलोचनाः

कुसुमानि सुगन्धानि सुवासश्चन्दनं तथा ।
सुगौरश्चापि कर्पूरं सुसूक्ष्माण्यम्बराणि च ॥ २० ॥

पर्णानि ऋजुताराणि जीर्णानि कठिनानि च ।
साग्राणि स्वर्णवर्णानि स्थूलनीलशिराणि च ॥ २१ ॥

सुवासोपस्कराढ्यानि नागवल्ल्या द्विजोत्तम ।
शय्याविचित्राभरणारतिशालोचितानि च ॥ २२ ॥

बहुकौतुकवस्तूनि समर्च्यद्विजदम्पती । भोगदानमिदं काम्यं प्रतिसंक्रमणं रवेः ॥ किं वा प्रतिव्यतीपातमेकसंवत्सरावधि । कोदादिति च मन्त्रेणयादद्याद्वरवर्णिनी कामरूपधरोदेवःप्रीयतामितिवादिनी । सा श्रेष्ठाऽप्सरसांमध्येवसेत्कल्पमिहाङ्गना

कन्यारूपधराकाचिद्वृत्याभुक्ताकेनचित्कचित् । देवरूपेणतं कालमारभ्यब्रह्मचारिणी
तदेव वृत्तं ध्यायन्तीनिधनंयातिकालतः । दिव्यरूपधरा सेहजायतेदिव्यभोगभाक्
निदानमप्सरोलोकस्येति श्रृणवन्द्विजाग्रणीः ।
सौरं लोकमथ प्राप्य क्षणेन सविमानगः ॥ २८ ॥
यथा कदम्बकुसुमंकिञ्जल्कैःसर्वतोवृतम् । देदीप्यमानंहि तथा समन्ताद्भानुभानुभिः
दूराद्रविं सविज्ञाय धृततामरसद्वयम् । नवभिर्योजनानां च सहस्त्रैःसम्मितेन ह ॥३०
विचित्रेणैकचक्रेण सप्तसप्तियुतेन च । अनूरुणाधिष्ठितेन पुरतोधृतरश्मिना ॥
अप्सरोमुनिगन्धर्वसर्पग्रामणिनैर्वृतैः । स्यन्दनेनातिजविना प्रणनाम कृताञ्जलिः
सत्य प्रणामंदेवोपि भ्रूभङ्गेनानुमन्य च । अतिदूरं नभोवर्त्म व्यतिचक्रामसक्षणात्
प्रकान्ते द्युमणौ दूरं शिवशर्मातिशर्मवान् ।
प्रोवाच भगवद्भक्तौ! कथं लभ्यं रवेःपदम् ॥ ३४ ॥
एतदिच्छाम्यहं श्रोतुमाचक्षाथां ममाग्रतः । सतांसाप्तपदीमैत्रीतन्मेमैत्र्याप्रणोदितौ

गणावूचतुः

श्रृणु द्विजमहाप्राज्ञत्वद्व्यकथ्यन्न किञ्चन । सत्सङ्गादेवसाधूनां सत्कथासम्प्रवर्तते
नियन्तासर्वभूतानां य एकःकारणं परम् । अनामागोत्ररहितो रूपादिपरिवर्जितः ॥
आविर्भावतिरोभावौ यद्भ्रूनर्तनवर्तिनौ । स एवं वक्ति सततं सर्वात्मावेदपूरुषः ॥
योऽसावादित्यपुरुषः सोसावहमितिस्फुटम् ।
अन्धं तमः प्रविश्यन्ति ये चैवान्यमुपासते ॥ ३६ ॥
निश्चितार्थां श्रुतिमिमांब्राह्मणासोद्विजोत्तम! । तमेकमुपतिष्ठन्तेनिश्चित्यैतिपुनःपुनः
उपलभ्यचसावित्रींनोपतिष्ठेतयः पराम् । कालेत्रिकालंसप्ताहाहात्स पतेन्नात्र संशयः
तावत्प्रातर्जपंस्तिष्ठेद्यावदर्धोदयो रवेः । आसनस्थोजपेन्मैनी प्रत्यग्ज्ञातारकोदयात्
सादित्यां मध्यमां सन्ध्याञ्जपेदादित्यसम्मुखः ।
काललोपो न कर्तव्यस्ततःकालं प्रतीक्षयेत् ॥ ४२ ॥
काले फलन्त्योषधयः काले पुष्पन्ति पादपाः ।



वर्षन्ति तोयदाः काले तस्मात्कालं न लङ्घयेत् ॥ ४४ ॥
मन्देहदेहनाशार्थमुदयास्तमये रविः । समीहते द्विजोत्सृष्टं मन्त्रतोयाञ्जलित्रयम्
गायत्रीमन्त्रतोयाढ्यंदत्तंयेनाञ्जलित्रयम । कालेसवित्रेकिंनस्यात्तेनदत्तं जगत्त्रयम्
किंकिंनसवितासूतेकालेसम्यगुपासितः । आयुरारोग्यमैश्वर्यं वसूनि स पशूनि च
मित्रपुत्रकलत्राणि क्षेत्राणि विविधानि च ।
भोगानष्टविधांश्चापि स्वर्गं चाप्यपवर्गकम् ॥ ४८ ॥
अष्टादशसुविद्यासु मीमांसातिगरीयसी । ततोपितर्कशास्त्राणिपुराणे तेभ्य एव च
ततोपिधर्मशास्त्राणितेभ्योगुर्वीश्रुतिर्द्विज !। ततोप्युपनिषच्छ्रेष्ठागायत्रीचततोधिका
दुर्लभासर्वमन्त्रेषु गायत्रीप्रणवान्विता । न गायत्र्याधिकंकिञ्चित्त्रयीषु परिगीयते
नगायत्रीसमो मन्त्रोनकाशीसदृशीपुरी । नविश्वेशसमंलिङ्गं सत्यं सत्यं पुनः पुनः
गायत्री वेदजननी गायत्रीब्राह्मणप्रसूः । गातारं त्रायतेयस्माद्गायत्री ते न गीयते
वाच्यवाचकसम्बन्धोगायत्र्याः सवितुर्द्वयोः ।
वाच्योसौ सविता साक्षाद्गायत्री वाचिका परा ॥ ५४ ॥
प्रभावेणैवगायत्र्याःक्षत्रियःकौशिकोवशी । राजर्षित्वंपरित्यज्यब्रह्मर्षिपदमीयिवान्
सामर्थ्यं प्राप चात्युच्चैरन्यद्भुवनसर्जने । किं किं न दद्याद्गायत्री सम्यगेवमुपासिता
न ब्राह्मणो वेदपाठान्न शास्त्रपठनादपि ।
देव्यास्त्रिकालमभ्यासाद् ब्राह्मणः स्याद्धि नान्यथा ॥ ५७ ॥
गायत्र्येवपरंविष्णुर्गायत्र्येव परःशिवः । गायत्र्येवपरोब्रह्मा गायत्र्येव त्रयी ततः
देवत्रयं सभगवानंशुमाली दिवाकरः । सर्वेषां महसांराशिः कालः कालप्रवर्तकः
अर्कमुद्दिश्य सततमस्मल्लोकनिवासिनः । श्रुतिह्युदाहरन्तीमां सारासारविवेकिनः
एषोहदेवः प्रदिशोनुसर्वाः पूर्वोह जातःस उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ्जनस्तिष्ठति सर्वतोमुखः ॥ ६१ ॥
सदैवमुपतिष्ठेरन् सौरैः सूक्तैरतन्द्रिता । येनमन्त्यत्रते विप्रा विप्राभास्करसन्निभाः
पुष्यार्केप्यथहस्तार्के मूलार्केप्यथवाद्विज । उत्तरार्केऽथयत्कार्यं तत्फलत्येवनान्यथा

पौषेमास्यर्कदिवसेयः स्नात्वाभास्करोदये । दानं होमंजपंकुर्यादर्चामर्कस्यसुव्रतः
श्रद्धावानेकभक्तश्च कामक्रोधविवर्जितः । सहाप्सरोभिद्यु तिमान्सवसेदत्रभोगवान्
अयनेविषुवेचापि षडशीतिमुखेषु वा । विष्णुपद्याश्चये दद्युर्महादानानि सुव्रताः

तिलाञ्जुह्वति साज्यांश्च ब्राह्मणान् भोजयन्ति च ।
पितॄनुद्दिश्य च श्राद्धं ये कुर्वन्ति विपश्चितः ॥ ६७ ॥

महापूजाश्च ये कुर्यु र्महामन्त्राञ्जपन्ति च । तेऽत्र वैकर्तने लोके विकर्तनसमप्रभाः ॥

न दरिद्रा न दुःखार्ता न व्याधिपरिपीडिताः ।
संक्रमेष्वर्कभक्ता ये नविरूपा न दुर्भगाः ॥ ६६ ॥

संक्रमेषु न यैर्दत्तं न स्नातंतीर्थवारिषु । विशेषहोमो न कृतःकपिलाज्याप्लुतैस्तिलैः
ते दृश्यन्ते प्रतिद्वारं विहीननयनाननाः । देहिदेहीति जल्पन्तो देहिनः सपटच्चराः

समंकृष्णलकेनापि यो दद्यात्काञ्चनं कृती ।
सूर्यग्रहे कुरुक्षेत्रे सवसेदत्र पुण्यभाक् ॥ ७२ ॥

सर्वंगङ्गासमन्तोयं सर्वेब्रह्मसमाद्विजाः । सर्वदेयं स्वर्णसमंराहुग्रस्ते दिवाकरे
दत्तं जप्तंहुतं स्नातं यत्किञ्चित्सदनुष्ठितम् । भानूपरागेश्राद्धादि तद्धेतुर्ब्रध्नसन्निधेः
रविवारे संक्रमश्चेदुपरागोऽथवा भवेत् । तदा यदर्जितं पुण्यं तदिहाक्षयमाप्यते ॥
भानुवारो यदा षष्ठ्यां सप्तम्यामथ जायते । तदायत्सुकृतंकर्म कृतन्तदिह भुज्यते

हंसो भानुः सहस्रांशुस्तपनस्तापनोरविः ।
विकर्तनो विवस्वांश्च विश्वकर्मा विभावसुः ॥ ७७ ॥
विश्वरूपो विश्वकर्ता मार्तण्डो मिहिरोंऽशुमान् ।
आदित्यश्चोष्णगुः सूर्योऽर्यमा ब्रध्नोदिवाकरः ॥ ७८ ॥

द्वादशात्मा सप्तहयोभास्करोऽहस्करः खगः । सूरःप्रभाकरः श्रीमाँल्लोकचक्षुर्ग्रहेश्वरः

त्रिलोकेशो लोकसाक्षी तमोरिः शाश्वतः शुचिः ।
गभस्तिहस्तस्तीव्रांशुस्तरणिः सुमहोरणिः ॥ ८० ॥

द्युमणिर्हरिदश्वोर्कोभानुमान्भयनाशनः । छन्दोश्वोवेदवेद्यश्चभास्वान्पूषा वृषाकपिः



एकचक्ररथो मित्रो मन्देहारिस्तमिस्रहा । दैत्यहा पापहर्ता च धर्मो धर्मप्रकाशकः
हेलिकश्चित्रभानुश्चकलिघ्नस्तार्क्ष्यवाहनः । दिक्पतिःपद्मिनीनाथःकुशेशयकरोहरिः

घर्मरश्मिर्दु र्निरीक्ष्यश्चण्डांशुः कश्यपात्मजः ।
एभिः सप्ततिसंख्याकैः पुण्यैः सूर्यस्य नामभिः ॥ ८४ ॥

प्रणवादिचतुर्थ्यन्तैर्नमस्कारसमन्वितैः । प्रत्येकमुच्चरन्नाम दृष्ट्वा दृष्ट्वा दिवाकरम्
विगृह्यपाणियुग्मेन ताम्रपात्रं सुनिर्मलम् । जानुभ्यामवनीं गत्वा परिपूर्यजलेन च
करवीरादिकुसुमैरक्तचन्दनमिश्रितैः । दूर्वाङ्कुरैरक्षतैश्चनिक्षिप्तैः पात्रमध्यतः ॥ ८७ ॥
दद्यादर्घ्यमनर्घायसवित्रेध्यानपूर्वकम् । उपमौलि समानीय तत्पात्रं नान्यद्रुङ्मनाः
प्रतिमन्त्रं नमस्कुर्यादुदयास्तमये रविम् । अनया नाम सप्तत्या महामन्त्ररहस्यया
एवं कुर्वन्नरो जातु न दरिद्रोनदुःखभाक् । व्याधिभिर्मुच्यतेघोरैरपिजन्मान्तरार्जितैः
विनौषधैर्विनावैद्यैर्विना पथ्यपरिग्रहैः । कालेन निधनं प्राप्तःसूर्यलोके महीयते ॥
इत्येकदेशः कथितो भानुलोकस्य सत्तम । महातेजो निधेरस्य को विशेषमवैत्यहो

स्वकर्णविषयी कुर्वन्निति पुण्यकथामिमाम् ।
क्षणादालोकयाञ्चक्रे महेन्द्रस्य महापुरीम् ॥ ६३ ॥

अगस्तिरुवाच

श्रुत्वा सौरीं कथामेतामप्सरोलोकसंयुताम् । न दरिद्रोभवेत्क्वापि नाधर्मेषु प्रवर्तते
ब्राह्मणैः सततं श्राव्यमिदमाख्यानमुत्तमम् । वेदपाठेन यत्पुण्यं तत्पुण्यफलदायकम्

ब्राह्मणाः क्षत्त्रिया वैश्याः शृण्वन्तोऽध्यायमुत्तमम् ।
पातकानि विसृज्येह गतिं यास्यन्त्यनुत्तमाम् ॥ ६६ ॥

इति श्रीस्कन्दे महापुराण एकाशीतिसाहस्र्यां संहितायां चतुर्थे काशीखण्डे
पूर्वार्द्धेऽप्सरःसूर्यलोकवर्णनंनाम नवमोऽध्यायः ॥ ६ ॥

---

# दशमोऽध्यायः

## इन्द्राग्निलोकवर्णनम्

### शिवशर्मोवाच

रमयन्तीमनोतीवकेयं कस्येयमीशितुः । नयनानन्दसन्दोहदायिनीपूरनुत्तमा ॥ १ ॥

### गणावूचतुः

शिवशर्मन्महाभाग! सुतीर्थफलितद्रुम !। लोकोऽत्र रमते विप्र सहस्राक्षपुरीत्वियम्

तपोबलेन महता विहिता विश्वकर्मणा ।

दिवापि कौमुदी यस्याः सौधश्रेणीश्रियं श्रयेत् ॥ ३ ॥

यदा कलानिधिः क्वापि दर्शे दृश्यत्वमावहेत् ।

तदा स्वप्रेयसीं ज्योत्स्नां सौधेष्वेषु निगूहयेत् ॥ ४ ॥

यदच्छभित्तौ वीक्ष्यस्वमन्ययोषिद्विशङ्किता ।

मुग्धानाशु विशेच्चित्रमपि स्वां चित्रशालिकाम् ॥ ५ ॥

हर्म्येषु नीलमणिभिर्निर्मितेष्वत्रनिर्भयम् । स्वनीलिमानमाधायतमोहःस्वपितिष्ठति

चन्द्रकान्तशिलाजालस्रुतमात्रामलञ्जलम् । तत्र चादायकलशैर्नैच्छन्त्यन्यज्जलञ्जनाः

कुविन्दा न च सन्त्यत्र न चतेपश्यतोहराः । चैलान्यलंकृतीरत्रयतःकलपद्रुमोऽर्पयेत्

गणका नात्र विद्यन्ते चिन्ताविद्याविशारदाः ।

यतश्चिकेति सर्वेषां चिन्तां चिन्तामणिद्रुतम् ॥ ६ ॥

सूपकारा न सन्त्यत्र रसकर्मविचक्षणाः । दुग्धे सर्वरसानेका कामधेनुरतो यतः ॥

कीर्तिरुच्चैःश्रवायस्यसर्वतोवाजिराजिषु । रत्नमुच्चैःश्रवाःसोत्रहयानांपौरुषाधिकः

ऐरावतो दन्तिवरश्चतुर्दन्तोत्र राजते । द्वितीय इवकैलासो जङ्गमस्फटिकोज्ज्वलः

तरुरत्नं पारिजातः स्त्रीरत्नं सोर्वशीत्विह । नन्दनं वनरत्नञ्च रत्नंमन्दाकिनीह्यपाम्

त्रयस्त्रिंशत्सुराणांयाकोटिःश्रुतिसमीरिता । प्रतीक्षतेसाऽवसरं सेवायै प्रत्यहंत्विह



स्वर्गेष्विन्द्रपदादन्यन्नविशिष्येतकिञ्चन । यद्यत्त्रिलोक्यामैश्वर्यं न तत्तुल्यमनेनहि

अश्वमेधसहस्रस्यलभ्यंविनिमयेन यत् । किन्तेन तुल्यमन्यत्स्यात्पवित्रमथवामहत्

अर्चिष्मती संयमिनी पुण्यवत्यमलावती । गन्धवत्यलकैशी च नैतत्तुल्यामहर्द्धिभिः

अयमेव सहस्राक्षस्त्वयमेवदिवस्पतिः । शतमन्युरयंदेवो नामान्येतानि नामतः ॥

सतापिलोकपालाये तएनं समुपासते । नारदाद्यैर्मुनिवरैरयमाशीभिरीड्यते ॥ १६ ॥

एतत्स्थैर्येण सर्वेषां लोकानां स्थैर्यमिष्यते ।

पराजयान्महेन्द्रस्य त्रैलोक्यं स्यात्पराजितम् ॥ २० ॥

दनुजा मनुजादैत्यास्तपस्यन्त्युग्रसंयमाः । गन्धर्वयक्षरक्षांसि महेन्द्रपदलिप्सवः

सगराद्या महोपाला वाजिमेधविधायकाः । कृतवन्तो महायत्नं शक्रैश्वर्यजिघृक्षवः

निष्प्रत्यूहं क्रतुशतं यः कश्चित्कुरुतेऽवनौ ।

जितेन्द्रियोमरावत्यां स प्राप्नोति पुलोमजाम् ॥ २३ ॥

असमाप्तक्रतुशता वसन्त्यत्रमहीभुजः । ज्योतिष्टोमादिभिर्यागैर्येयजन्त्यपितेद्विजाः

तुलापुरुषदानादिमहादानानिषोडश । ये यच्छन्त्यमलात्मानस्ते लभन्तेऽमरावतीम्

अक्लीबवादिनो धीराः संग्रामेष्वपराङ्मुखाः ।

विक्रान्ता वीरशयने तेऽत्र तिष्ठन्ति भूभुजः ॥ २६ ॥

इत्युद्देशात्समाख्यातामहेन्द्रनगरीस्थितिः । यायजूकावसन्त्यत्रयज्ञविद्याविशारदाः

इमामर्चिष्मतीं पश्य वीतिहोत्रपुरींशुभाम् । जातवेदसियेभक्तास्तेवसन्त्यत्रसुव्रताः

अग्निप्रवेशंयेकुर्युर्दृढसत्त्वाजितेन्द्रियाः । स्त्रियोवासत्त्वसम्पन्नास्तेसर्वेह्यग्नितेजसः

अग्निहोत्ररताविप्रास्तथाग्निब्रह्मचारिणः । पञ्चाग्निव्रतिनोयेवैतेऽग्निलोकेऽग्नितेजसः

शीते शीतापनुत्त्यै यस्त्विध्मभारान्प्रयच्छति ।

कुर्यादग्निष्टिकां वाऽथ स वसेदग्निसन्निधौ ॥ ३१ ॥

अनाथस्याग्निसंस्कारंयः कुर्याच्छ्रद्धयान्वितः । अशक्तःप्रेरयेदन्यंसोऽग्निलोकेमहीयते

जठराग्निविवृद्धयैयोदद्यादाग्नेयमौषधम् । मन्दाग्नयेसपुण्यात्मावह्निलोकेवसेच्चिरम्

यज्ञोपस्करवस्तूनि यज्ञार्थंद्रविणंतु वा । यथाशक्तिप्रदद्याद्यो ह्यर्चिष्मत्यांवसेत्सः

अग्निरेकोद्विजातीनां निः श्रेयसकरः परः । गुरुर्देवोव्रतंतीर्थं सर्वमग्निर्विनिश्चितम्
अपावनानिसर्वाणिवह्निसंसर्गतःक्षणात् । पावनानिभवन्त्येवतस्माद्यःपावकःस्मृतः
अपिवेदंविदित्वायस्त्यत्त्वावैजातवेदसम् । अन्यत्रबध्नातिरतिंब्राह्मणोनसवेदवित्

अन्तरात्मा ह्ययं साक्षान्निश्चितो ह्याशुशुक्षणिः ।
मांसग्रासान्पचेत्कुक्षौ स्त्रीणां नो मांसपेशिकाम् ॥ ३८ ॥
तैजसी शाम्भवीमूर्त्तिः प्रत्यक्षा दहनात्मिका ।
कर्त्री हन्त्री पालयित्री विनैनां किं विलोक्यते ॥ ३९ ॥

चित्रभानुरयं साक्षान्नेत्रं त्रिभुवनेशितुः । अन्धन्तमोमयेलोके विनैनङ्कःप्रकाशकः
धूपप्रदीपनैवेद्यपयोदधिघृतैक्षवम् । एतद्भुक्तंनिषेवन्ते सर्वे दिवि दिवौकसः ॥४१॥

शिवशर्मोवाच

कोयं कृशानुः कस्यायं सूनुः कथमिदंपदम् । आग्नेयं लब्धमेतेन ब्रूतमेतन्ममाग्रतः

गणावूचतुः

आकर्णय महाप्राज्ञवर्णयावोयथातथम् । योयंयस्य यथाऽनेनप्रापिज्योतिष्मतीपुरी
नर्मदायास्तटे रम्ये पुरे नर्मपुरेपुरा । पुरारिभक्तः पुण्यात्माऽभवद्विश्वानरो मुनिः ॥
ब्रह्मचर्याश्रमेनिष्ठो ब्रह्मयज्ञरतः सदा । शाण्डिल्यगोत्रः शुचिमान्ब्रह्मतेजोनिधिर्वशी

विज्ञाताखिलशास्त्रार्थो लौकिकाचारचञ्चुरः ।
कदाचिच्चिन्तयामास हृदि ध्यात्वा महेश्वरम् ॥ ४६ ॥
चतुर्णामप्याश्रमाणां कोऽतीव श्रेयसे सताम् ।
यस्मिन् प्राप्नोति संक्षुण्णेपरत्रेहच वा सुखम् ॥ ४७ ॥

इदं श्रेयस्त्विदं श्रेयस्त्विदं तु सुकरं भवेत् । इत्थंसर्वंसमालोड्यगार्हस्थ्यंप्रशशंसह

ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ।
एषामाधारभूतोसौ गृहस्थो नाऽन्यथेति च ॥ ४९ ॥
देवैर्मनुष्यैः पितृभिस्तिर्यग्भिश्चोपजीव्यते ।
गृहस्थः प्रत्यहं यस्मात्तस्माच्छ्रेष्ठो गृहाश्रमी ॥ ५० ॥



[...]स्नात्वाचाप्यहुत्वावा[...]दत्त्वावाश्नातियोगृही । देवादीनामृणीभूत्वानरकंप्रतिपद्यते

अस्नाताशी मलं भुङ्क्ते [...]जपी पूयशोणितम् ।
अहुताशी कृमीन्भुङ्क्तेऽप्यदत्त्वा विड्विभोजनः ॥ ५२ ॥

[...]ह्मचर्यंहि गार्हस्थ्ये यादृक्कल्पनयोज्झितम् । स्वभावचपलेचित्तेकतादृग्ब्रह्मचारिणि
[...]ठाद्वा लोकभीत्यावा स्वार्थाद्वाब्रह्मचर्यभाक् । सङ्कल्पयतिचित्तेचेत्कृतमप्यकृतंतदा
परदारपरित्यागात्स्वदारपरितुष्टितः । ऋतुकालाभिगामित्वाद्ब्रह्मचारी गृहीरितः
विमुक्तरागद्वेषो यःकामक्रोधविवर्जितः । साग्निःसदारःसगृहीवानप्रस्थाद्विशिष्यते
[...]राग्याद्गृहमुत्सृज्य गृहधर्मान् हृदिस्मरेत् । सभवेदुभयभ्रष्टोवानप्रस्थोनवा गृही
[...]याचितोपस्थितया योवृत्त्यावर्तते गृही । येनकेनापिसन्तुष्टोभिक्षुकात्सविशिष्यते

प्रार्थयेद्यत्कचित्किञ्चिद् दुष्प्रापं वा भविष्यति ।
अशनेषु न सन्तुष्टः स यतिः पतितो भवेत् ॥ ५९ ॥
गुणागुणं विचार्येत्थं सवैविश्वानरो द्विजः ।
उद्ववाह विधानेन स्वोचितां कुलकन्यकाम् ॥ ६० ॥

[...]ग्निशुश्रूषणरतः पञ्चयज्ञपरायणः । षट्कर्मनिरतोनित्यं देवपित्रतिथिप्रियः ॥ ६१

धर्मार्थकामान् युक्तात्मा सोऽर्जयन् स्वस्वकालतः ।
परस्परमसङ्कोचं दम्पत्योरानुकूल्यतः ॥ ६२ ॥

[...]र्वाह्णे दैविकं कर्म सोकरोत्कर्मकाण्डवित् । मध्यंदिनेमनुष्याणांपितृणामपराह्णके
[...]वंबहुतिथेकाले गते तस्याग्रजन्मनः । भार्या शुचिष्मती नाम कामपत्नी वसुव्रता
[...]पश्यन्त्यङ्कुरमपि सन्ततेः स्वर्गसाधनम् । विज्ञायशङ्करंकान्तंप्रणिपत्यव्यजिज्ञपत्

शुचिष्मत्युवाच

[...]र्यपुत्रार्यधिषण! प्राणनाथ! प्रियव्रत !। नदुर्लभम्ममास्तीहकिञ्चित्त्वच्चरणार्चनात्

ये वै भोगाः समुचिताः स्त्रीणां ते त्वत्प्रसादतः ।
अलङ्कृत्य मया भुक्ताः प्रसङ्गाद्वच्मि तान्यपि ॥ ६७ ॥
सुवासांसि सुवासाश्च सुशय्या सुनितम्बिनी ।

स्रक्ताम्बूलान्नपानाश्च अष्टौ भोगाः स्वधर्मिणाम् ॥ ६८ ॥

एकं मे प्रार्थितंनाथचिराय हृदिसंस्थितम् । गृहस्थानांसमुचितंतत्त्वंदातुमिहार्हसि

विश्वानर उवाच

किमदेयंहि सुश्रोणि! तवप्रियहितैषिणि । तत्प्रार्थयमहाभागेप्रयच्छाम्यविलम्बितम्

महेशितुः प्रसादेन ममकिञ्चिन्न दुर्लभम् । इहामुत्रचकल्याणि! सर्वकल्याणकारिणः

इतिश्रुत्वा वचःपत्युस्तस्य सापतिदेवता । उवाच हृष्टवदना यदि देयो वरो मम

वरयोग्यास्मिचेन्नाथ नान्यं वरमहंवृणे । महेशसदृशं पुत्रं देहि माहेश्वरानघ !॥ ७३ ॥

इति तस्या वचःश्रुत्वा शुचिष्मत्याः शुचिव्रतः ।

क्षणं समाधिमाधाय हृद्येतत्समचिन्तयत् ॥ ७४ ॥

अहोकिमेतया तन्व्या प्रार्थितं ह्यतिदुर्लभम् । मनोरथपथाद्दूरमस्तुवासहिसर्वकृत्

तेनैवास्या मुखे स्थित्वा वाक्स्वरूपेण शम्भुना ।

व्याहृतं कोऽन्यथाकर्तुमुत्सहेत भवेदिदम् ॥ ७६ ॥

ततःप्रोवाचतांपत्नीमेकपत्नीव्रतेस्थितः । विश्वानरमुनिःश्रीमानितिकान्तेभविष्यति

इत्थमाश्वास्य तां पत्नीं जगामतपसेमुनिः ।

यत्र विश्वेश्वरः साक्षात्काशीनाथोऽधितिष्ठति ॥ ७८ ॥

प्राप्यवाराणसींतूर्णंदृष्ट्वाथ मणिकर्णिकाम् । तत्याजतापत्रितयमपिजन्मशतार्जितम्

दृष्ट्वासर्वाणिलिङ्गानि विश्वेशप्रमुखानि च । स्नात्वासर्वेषुकुण्डेषु वापीकूपसरःसु च

नत्वा विनायकान्सर्वान् गौरीः सर्वाः प्रणम्य च ।

सम्पूज्य कालराजं च भैरवं पापभक्षणम् ॥ ८१ ॥

दण्डनायकमुख्यांश्च गणान्स्तुत्वा प्रयत्नतः ।

आदिकेशवमुख्यांश्च केशवान् परितोष्य च ॥ ८२ ॥

लोलार्कमुख्यसूर्यांश्च प्रणम्यचपुनःपुनः । कृत्वापिण्डप्रदानानि सर्वतीर्थेष्वतन्द्रितः

सहस्रभोजनाद्यैश्चयतीन्विप्रान् प्रतर्प्यच । महापूजोपचारैश्चलिङ्गान्यभ्यर्च्यभक्तितः

असकृच्चिन्तयामासकिं लिङ्गं क्षिप्रसिद्धिदम् । यत्रनिश्चलतामेतितपस्तनयकाम्यया



श्रीमदोङ्कारनाथं वा कृत्तिवासेश्वरं किमु । कालेशं वृद्धकालेशं कलशेश्वरमेव च

केदारेशं तु कामेशं चन्द्रेशं वा त्रिलोचनम् । ज्येष्ठेशंजम्बुकेशं वा जैगीषव्येश्वरंतुवा

दशाश्वमेधमीशानं द्रुमिचण्डेशमेव च । ढक्केशं गरुडेशं च गोकर्णेशं गणेश्वरम् ॥

ढुण्ढ्याशागजसिद्धाख्यं धर्मेशं तारकेश्वरम् । नन्दिकेशंनिवासेशंपत्रीशंप्रीतिकेश्वरम्

पर्वतेशं पशुपतिं ब्रह्मेशं मध्यमेश्वरम् । बृहस्पतीश्वरं वाथ विभाण्डेश्वरमेव च ॥

भारभूतेश्वरं किं वा महालक्ष्मीश्वरं तु वा । मरुत्तेशं तु मोक्षेशं गङ्गेशं नर्मदेश्वरम्

मार्कण्डंमणिकर्णीशं रत्नेश्वरमथापिवा । अथवायोगिनीपीठंसाधकस्यैवसिद्धिदम्

यामुनेशं लाङ्गलीशं श्रीमद्विश्वेश्वरंविभुम् । अविमुक्तेश्वरंवाथ विशालाक्षीशमेवच

व्याघ्रेश्वरं वराहेशं व्यासेशं वृषभध्वजम् । वरुणेशं विधीशंवा वसिष्ठेशं शनीश्वरम्

सोमेश्वरं किमिन्द्रेशं स्वर्लीनं सङ्गमेश्वरम् ।

हरिश्चन्द्रेश्वरं किम्वा हरिकेशेश्वरं तु वा ॥ ६५ ॥

त्रिसन्ध्येशं महादेवमुपशान्तिं शिवं तथा । भवानीशंकपर्दीशंकन्दुकेशंमखेश्वरम् ॥

मित्रावरुणसञ्ज्ञं वाकिमेषामाशुपुत्रदम् । क्षणं विचार्य स मुनिरितिविश्वानरःसुधीः

आज्ञातं विस्मितं तावत्फलितो मे मनोरथः ।

सिद्धैःसंसेवितं लिङ्गं सर्वसिद्धिकरम्परम् ॥ ६८ ॥

दर्शनात्पर्शनाद्यस्य मनोनिर्वृतिभाग्भवेत् । उद्घाटितं सदैवास्तेस्वर्गद्वारंहि यत्र वै

दिवानिशं पूजनार्थं विज्ञाप्य त्रिदशेश्वरम् । पञ्चमुद्रे महापीठे सिद्धिदे सर्वजन्तुषु

यत्र सा विकटा देवी प्रकटा सिद्धिरूपिणी ।

यत्र स्थितानां भक्तानां साक्षात्सिद्धिविनायकः ॥ १०१ ॥

निर्धूय विघ्नजालानि सर्वाः सिद्धीः प्रयच्छति ।

अविमुक्ते महाक्षेत्रे सिद्धिक्षेत्रं हि तत्परम् ॥ १०२ ॥

यत्र वीरेश्वरं लिङ्गं महागुह्यतमम्मतम् ।

तिलान्तरापि नो काश्यां भूमिर्लिङ्गं विना क्वचित् ॥ १०३ ॥

परं वीरेशसदृशं न लिङ्गं त्वाशु सिद्धिदम् । धर्मदं चार्थदं सम्यक्कामदं मोक्षदं तथा

यथा वीरेश्वरं लिङ्गं काश्यां नान्यत्तथा ध्रुवम् ।
पञ्चस्वरोऽत्रगन्धर्वः परां सिद्धिमगात्पुरा ॥ १०५ ॥
विद्याधरः स्वच्छविद्यो वसुपूर्णश्चयक्षराट् । नृत्यन्तीनिजभावेनपुराह्यत्राप्सरोवरा
सदेहाकोकिलालापा लिङ्गमध्येलयंगता । ऋषिर्वेदशिरा नाम जपन् वै शतरुद्रियम्
मन्त्रज्योतिर्मयेलिङ्गे सशरीरोऽविशत्पुरा । चन्द्रमौलिभरद्वाजावुभौपाशुपतोत्तमौ
वीरेश्वरं समभ्यर्च्य गायमानौ लयं गतौ ।
शङ्खचूडो हि नागेन्द्रः स्वफणामणिभिर्निशि ॥ १०६ ॥
षण्मासात्सिद्धिमगमद्बहुनीराजनैरिह । किन्नरी हंसपद्यत्र भर्त्रावेणुप्रियेण वै ॥
गायन्ती सुस्वरं याता परांनिर्वाणभूमिकाम् ।
असङ्ख्याताः सहस्राणि सिद्धाः सिद्धिमिहागताः ॥ १११ ॥
सिद्धलिङ्गमिहाख्यातं तस्माद्वीरेश्वरम्परम् ॥ ११२ ॥
वीरेश्वरं समाराध्य भ्रष्टराज्यो जयद्रथः । हत्वारिपूनस्खलितं राज्यंप्राप विदेहजः
विदूरथोऽथ नृपतिरपुत्रः पुत्रवानभूत् । वीरेश्वरप्रसादेन मगधाधिपतिर्वशा ॥११४
वसुदत्तोऽत्र च वणिक् सुतां वसुसुतोपमाम् ।
अब्दमभ्यर्च्य वीरेशं रत्नदत्तोप्यवाप्तवान् ॥ ११५ ॥
अहमप्यत्र वीरेशं समाराध्यत्रिकालतः । आशुपुत्रमवाप्स्यामियथाभिलषितंस्त्रिया
इति कृत्वा मतिंधीरो विप्रोविश्वानरःकृती । चन्द्रकूपजलैःस्नात्वाजग्राह नियमंव्रती
एकाहारो भवन्मासं मासंनक्ताशनोऽभवत् । अयाचिताशनोमासंमासंत्यक्ताशनःपुनः
पयोव्रतोऽभवन्मासं मासंशाकफलाशनः । मासंमुष्टितिलाहारोमासं पानीयभोजनः
पञ्चगव्याशनोमासं मासं चान्द्रायणव्रती । मासं कुशाग्रजलभुङ्मासं श्वसनभक्षणः
अथत्रयोदशेमासि स्नात्वात्रिपथगाम्भसि । प्रत्यूषएववीरेशं यावदायाति सद्द्विजः
तावद्विलोकयाञ्चक्रे मध्येलिङ्गं तपोधनः । विभूतिभूषितं बालमष्टवर्षाकृति शुभम्
आकर्णपूर्णनेत्रञ्चसुरक्तदशनच्छदम् । चारुपिङ्गजटामौलिं नग्नं प्रहसिताननम् ॥
शैशवोचितनेपथ्यधारिणं चित्तहारिणम् । पठन्तंश्रुतिसूक्तानिहसन्तञ्चस्वलीलया



समालोक्यस्तुतिंचक्रेरोमकञ्चुकितोमुदा । प्रोच्चरद्गद्गदालापोनमोऽस्त्वितिपुनःपुनः

विश्वानर उवाच

एकं ब्रह्मैवाऽद्वितीयं समस्तं सत्यं सत्यं नेह नानाऽस्ति किञ्चित् ।
एको रुद्रो न द्वितीयोऽवतस्थे तस्मादेकं त्वां प्रपद्ये महेशम् ॥ १२६ ॥
एकः कर्ता त्वं हि सर्वस्य शम्भो! नानारूपेष्वेकरूपोऽस्यरूपः ।
यद्वत्प्रत्यप्स्वर्क एकोप्यनेकस्तस्मान्नान्यं त्वां विनेशं प्रपद्ये ॥ १२७ ॥
रज्जौ सर्पः शुक्तिकायाञ्च रूप्यं नैरःपूरस्तन्मृगाख्ये मरीचौ ।
यद्वत्तद्वद्विष्वगेषप्रपञ्चो यस्मिन् ज्ञाते तं प्रपद्ये महेशम् ॥ १२८ ॥
तोये शैत्यं दाहकत्वञ्च वह्नौ तापो भानौ शीतभानौ प्रसादः ।
पुष्पे गन्धो दुग्धमध्येऽपि सर्पिर्यत्तच्छम्भो त्वं ततस्त्वां प्रपद्ये ॥ १२९ ॥
शब्दं गृह्णास्यश्रवास्त्वं हि जिघ्रेरघ्राणस्त्वं व्यङ्घ्रिरायासि दूरात् ।
व्यक्षः पश्येस्त्वं रसज्ञोऽप्यजिह्वः कस्त्वां सम्यग्वेत्त्यतस्त्वां प्रपद्ये ॥ १३०
नो वेदस्त्वामीश! साक्षाद्धि वेद नो वा विष्णुर्नो विधाताऽखिलस्य ।
नो योगीन्द्रा नेन्द्रमुख्याश्च देवा भक्तो वेद त्वामतस्त्वां प्रपद्ये ॥ १३१ ॥
नो ते गोत्रं नेश जन्मापि नाख्या नो वा रूपंनैव शीलं नदेशः ।
इत्थंभूतोऽपीश्वरस्त्वं त्रिलोक्याः सर्वान् कामान् पूरयेस्तद्भजे त्वाम् ॥
त्वत्तः सर्वंत्वंहिसर्वं स्मरारे त्वं गौरीशस्त्वञ्च नग्नोऽतिशान्तः ।
त्वं वै वृद्धस्त्वंयुवा त्वञ्च बालस्तत्त्वं यत्किन्नाऽस्यतस्त्वां नतोऽस्मि ॥
स्तुत्वेति भूमौ निपपातविप्रः सदण्डवद्यावदतीवहृष्टः ।
तावत्सबालोऽखिलवृद्धवृद्धः प्रोवाच भूदेव! वरं वृणीहि ॥ १३४ ॥
तत उत्थाय हृष्टात्मा मुनिर्विश्वानरः कृती । प्रत्यब्रवीत्किमज्ञातं सर्वज्ञस्य तवप्रभो!
सर्वान्तरात्मा भगवान् सर्वः सर्वप्रदो भवान् ।
याच्ञ्यां प्रतिनियुङ्क्ते मां किमीशो दैन्यकारिणीम् ॥ १३६ ॥
इति श्रुत्वा वचस्तस्य देवो विश्वानरस्य ह ।

